व्योषवेल्लकचूर्णैश्च समांशैः सह मेलयेत् ॥ १८८ ॥
मध्वाज्यसहितं हन्ति प्रलीढं वल्लमात्रया ।
अशीतिवातजान्रोगान्धनुर्वातं विशेषतः ॥ १८९ ॥
कफरोगानशेषांश्च मूत्ररोगांश्च सर्वशः ।
श्वासं कासं क्षयं पाण्डुं श्वयथुं शीतिकाज्वरम् ॥ १९० ॥
ग्रहणीयामदोषं च वह्निमान्द्यं सुदुर्जरम् ।
सर्वानुदकदोषांश्च तत्तद्रोगानुपानतः ॥ १९१ ॥

**अथ पित्तलम्**—रीतिका काकतुण्डी च द्विविधं पित्तलं भवेत् ।
संतप्ता काञ्जिके क्षिप्त्वा ताम्राभा रीतिका मता ॥ १९२ ॥
एवं या जायते कृष्णा काकतुण्डीति सा मता ।
रीतिस्तिक्तरसा रूक्षा जन्तुघ्नी सास्रपित्तनुत् ।
कृमिकुष्ठहरा योगात्सोष्णवीर्या च शीतला ॥ १९३ ॥
काकतुण्डी गतस्नेहा तिक्तोष्णा कफपित्तनुत् ।
यकृत्प्लीहहरा शीतवीर्या च परिकीर्तिता ॥ १९४ ॥
गुर्वी मृद्वी च पीताभा साराङ्गी ताडनक्षमा ।
सुस्निग्धा मसृणाङ्गी च रीतिरेतादृशी शुभा ॥ १९५ ॥
पाण्डुपीता खरा रूक्षा बर्बरा ताडनक्षमा ।
पूतिगन्धा तथा लघ्वी रीतिर्नेष्टा रसादिषु ॥ १९६ ॥
तप्ता क्षिप्त्वा च निर्गुण्डीरसे श्यामारजोन्विते ।
पञ्चवारेण संशुद्धिं रीतिरायाति निश्चितम् ॥ १९७ ॥
सुवर्णरीतिकाचूर्णं भक्षितं विक्षितं पुनः ।
छागेन कृष्णवर्णेन मत्तेन तरुणेन च । ॥ १९८ ॥
तल्लिप्तं खर्परे दग्धं द्युतिं मुञ्चति शोभनाम् ॥ १९९ ॥
चतुर्दशलसद्वर्णसुवर्णसदृशच्छविः ।
देहलोहकरी भोक्ता युक्ता रसरसायने ॥ २०० ॥
निम्बूरसशिलागन्धवेष्टिता पुटिताऽष्टधा ।
रीतिरायाति भस्मत्वं ततो योज्या यथायथम् ॥ २०१ ॥
ताम्रवन्मारणं तस्याः कृत्वा सर्वत्र योजयेत् ।
मृतारकूटकं कान्तं व्योमसत्त्वं च मारितम् ॥ २०२ ॥

१ ग. शीतकं ज्व°। घ. शीतकज्व°। २ ख. सन्तप्ता। ३ ङ. ताम्रभा। ४ ग. कृष्णकु°। ५ घ. °एरी त्वतिक्ते°। ६ ङ. तप्त्वा। ७ ग. रीतिर्मुञ्चति शोभनम्।

त्र्यं समांशकं तुल्यव्योपं जन्तुघ्नसंयुतम् ।
ब्रह्मबीजाजमोदाग्निभल्लाततिलसंयुतम् ॥ २०३ ॥
सेवितं निष्कमात्रं हि जन्तुघ्नं कुष्ठनाशनम् ।
विशेषाच्छ्वेतकुष्ठघ्नं दीपनं पाचनं हितम् ॥ २०४ ॥

**अथ कांस्यम्**—अष्टभागेन ताम्रेण द्विभागकुटिलेन च ।
विद्रुतेन भवेत्कांस्यं तत्सौराष्ट्रभवं शुभम् ॥ २०५ ॥
तीक्ष्णशब्दं मृदु स्निग्धमीषच्छ्यामलशुभ्रकम् ।
निर्मलं दाहरक्तं च षोढा कांस्यं प्रशस्यते ॥ २०६ ॥
तत्पीतं दहने ताम्रं खरं रूक्षं घनासहम् ।
मर्दनादागतज्योतिः सप्तधा कांस्यमुत्सृजेत् ॥ २०७ ॥
कांस्यं लघु च तिक्तोष्णं लेखनं दृक्प्रसादनम् ।
क्रमिकुष्ठहरं वातपित्तघ्नं दीपनं हितम् ॥ २०८ ॥
घृतमेकं विना चान्यत्सर्वं कांस्यगतं नृणाम् ।
भुक्तमारोग्यसुखदं हितं सात्म्यकरं तथा ॥ २०९ ॥
तप्तं कांस्यं गवां मूत्रे वापितं परिशुध्यति ।
म्रियते गन्धतालाभ्यां निरुत्थं पञ्चभिः पुटैः ॥ २१० ॥
त्रिक्षारं पञ्चलवणं सप्तधाऽम्लेन भावयेत् ।
कांस्यारघोषपत्राणि तेन कल्केन लेपयेत् ॥
रुद्ध्वा गजपुटे पक्वं शुद्धिमायाति नान्यथा ॥ २११ ॥

**अथ वर्तलोहम्**—कांस्यार्करीतिलोहाहिजातं तद्वर्तलोहकम् ।
तदेव पञ्चलोहाख्यं लोहविद्भिरुदाहृतम् ॥ २१२ ॥
हिमाम्लं कटुकं रूक्षं कफपित्तविनाशनम् ।
रुच्यं त्वच्यं क्रमिघ्नं च नेत्र्यं मलविशोधनम् ॥ २१३ ॥
तद्भाण्डे साधितं सर्वमन्नव्यञ्जनसूपकम् ।
अम्लेन वर्जितं चातिदीपनं पाचनं हितम् ॥ २१४ ॥
द्रुतमश्वजले क्षिप्तं वर्तलोहं विशुध्यति ॥ २१५ ॥
म्रियते गन्धतालाभ्यां पुटितं वर्तलोहकम् ।
तेषु तेष्विह योगेषु योजनीयं यथाविधि ॥ २१६ ॥

---

१ ग °व्योषज°। २ ट. °रसूतेन। ३ ट. ततन। ४ ग मन्दनाद् गतज्योति स°। ५ ग. °मिरोटिह°। ६ ग पचकटुक। ७ ग मर्दयेत्। ८ ख °घ्नरसूदर°। ९ क. °हानि ज°। ग. °हानि ज°। १० ख. तैष्वपि। ट. तेष्वथ।

जातिमद्भिर्विशुद्धैश्च विधिना परिसाधितैः ।
रसोपरसलोहाद्यैः सूतः सिध्यति नान्यथा ॥ २१७ ॥
रत्नानि लोहानि वराटशुक्तिपाषाणजातं खुरशृङ्गशल्यम् ।
महारसाद्येषु कठोरदेहं भस्मीकृतं तत्खलु सूतयोग्यम् ॥२१८॥
वज्राणां द्रावणार्थाय सत्त्वं भूनागजं ब्रुवे ।
तदेव परमं तेजः सूतराजेन्द्रवज्रयोः ॥ २१९ ॥
धौतं भूनागसंभूतं मर्दयेद्भृङ्गजद्रवैः ।
निम्बुद्रवैश्च निर्गुण्ड्याः स्वरसैस्त्रिदिनं पृथक् ॥ २२० ॥
तेद्द्रावणगणोपेतं संमर्द्य वटकीकृतम् ।
निरुध्य दृढमूषायां द्विदण्डं धमेद्दृढम् ॥ २२१ ॥
स्वतः शीतं समाहृत्य पट्टके विनिवेश्य तत् ।
रक्तान्राजिकातुल्यान्रेणूनतिभरान्वितान् ॥
द्वादशांशार्कसंयुक्तान्धमित्वा रक्तांश्चरेत् ॥ २२२ ॥
प्रक्षाल्य रक्तानाशु समादाय प्रयत्नतः ।
वज्रादिद्रावणं तेन प्रकुर्वीत यथेप्सितम् ॥ २२३ ॥
खरसत्त्वमिदं प्रोक्तं रसायनमनुत्तमम् ।
द्वित्रिमूषासु चैकस्यां सत्त्वं भवति निश्चयः ॥ २२४ ॥
भुजङ्गमानुपादाय चतुष्परथसमन्वितान् ।
सुवर्णरूप्यताम्रायस्कान्तसंभूतभूमिजान् ॥ २२५ ॥
प्रक्षाल्य रजनीतोयैः शीतलैश्च जलैरपि ॥ २२६ ॥
उपोषितं मयूरं वा शूरं वा चरणायुधम् ।
क्रमेण चारयित्वाऽथ तद्विष्ठां समुपाहरेत् ॥ २२७ ॥
क्षाराम्लैः सह संपेष्य विशोष्य च खरातपे ।
ततः खर्परके क्षिप्त्वा भर्जयित्वा मर्पां चरेत् ॥ २२८ ॥
मर्पां द्रावणवर्गेण संयुक्तां सम्प्रमर्दिताम् ।
निरुध्यं कोष्ठिकामध्ये प्रधमेद्घटिकाद्वयम् ॥
शीतलीभूतमूषायाः स्नोटमाहृत्य पेपयेत् ॥ २२९ ॥

---

दृण्डमिति घण्टिका ।

---

१ घ परिशोधितैः । २ क योज्यम् । ३ क श्चै । ग श्चन् । ज मेवेत् । ४ ड धौतम् । ५ घ तत्तद्द्रावण । ६ ज °वकान्पचेत् । ७ ख निश्चयम् । ८ निश्चितम् । ८ ड ज °भनिभ° । ९ क °ध्य श्रांधिरा° ।

प्रक्षाल्य खकानाशु समादाय प्रयत्नतः ।
सुवर्णमानवद्ध्मात्वा नैवं कृत्वा नियोजयेत् ॥ २३० ॥
भूनागोद्भवसत्त्वमुत्तमतमं श्रीसोमदेवोदितं
दत्तं पादमितं द्विपाणकनकेनैकंगतेनोर्मिकाम् ।
तद्धौताम्बुविलेपनं स्थिरचरोद्भूतं विषं नेत्ररु-
क्शूलं मूलगदं च कर्णजरुजो हन्यात्प्रसूतिग्रहम् ॥ २३१ ॥

**अथ तैलपातनविधिः**—मूलान्युत्तरवारुण्या जर्जरीकृत्य काञ्जिके ।
क्षिपेदङ्कोल्लबीजानां पेषिकां झर्झरीकृताम् ॥ २३२ ॥
तत्तैलं घृतवरस्त्यानं ग्राह्यं तत्तु यथाविधि ।
संपेष्योत्तरवारुण्याः पेठकायां दलान्यथ ॥ २३३ ॥
काञ्जिकेन ततस्तेन कल्केन परिमर्दयेत् ।
रजश्चाङ्कोल्लबीजानां तद्बद्ध्वा विरलाम्बरे ॥ २३४ ॥
तद्विलम्ब्याऽऽतपे तीव्रे तस्याधश्चषकं न्यसेत् ।
तस्मिन्निपतितं तैलमादेयं श्वित्रनाशनम् ॥ २३५ ॥
अङ्कोलबीजसंभूतं चूर्णं संमर्द्य काञ्जिकैः ।
एकरात्रोषितं तत्तु पिण्डीकृत्य ततः परम् ॥ २३६ ॥
स्वेदयेत्कन्दुके पात्रे घटिकाद्वितयं ततः ।
तां च पिण्डीं दृढे वस्त्रे वद्ध्वा निष्पीड्य काष्ठतः ॥ २३७ ॥
अधःपात्रस्थितं तैलं समाहृत्य नियोजयेत् ।
एवं कन्दुकपत्रेण सर्वतैलान्युपाहरेत् ॥ २३८ ॥
अङ्कोल्लस्यापि तैलं स्यात्काकतुण्ड्या समूलया ।
वाकूचीदेवदाल्योश्च कर्कोटीमूलतो भवेत् ॥ २३९ ॥
अपामार्गकषायेण तैलं स्याद्द्विषमुष्टिजम् ।
मूलकाथैः कुमार्याश्च तैलं जैपालजं हरेत् ॥ २४० ॥
काथे रक्तापमार्गस्य वाकूचीतैलमाहरेत् ।
कृष्णायाः काकतुण्ड्याश्च बीजचूर्णानि कारयेत् ॥ २४१ ॥

---

१ ग. कान्सूक्ष्मान्समा॰। ट. ॰कान्पांसून्समा॰। २ ख. रत्नं। ३ क. ॰समनं श्री॰। ४ क ट. द्विशाण॰। ५ ख. ॰मिकम्। ६ ख. ॰रैणि स्थि॰। ७ ट. नेत्ररद॰। ८ क. कर्करीकृत्य। ख. झर्झरीकृत्य। ९ क. ॰द्रोन्दी॰। १० ज. पेशिकां। ११ क. कर्करीकृताम्। घ. जर्जरीकृताम्। १२ ग. पट्टरागो। १३ क ॰न्दुकाय॰। घ. ॰स्तदुवार॰। १४ घ. मुसल्या। १५ घ. नेपालज।

कान्तपाषाणचूर्णं च एकीकृत्य विशोधयेत् ।
धान्यराशिगतं पश्चादुद्धृतं तैलमाहरेत् ॥ ४२ ॥ ७३८ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये
लोहशोधनमारणादिनिरूपणं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## अथ षष्ठोऽध्यायः ।

### [ अथ शिष्योपनयनम् । ]

रसशास्त्राणि सर्वाणि समालोच्य यथाक्रमम् ।
साधकानां हितार्थाय प्रकटीक्रियतेऽधुना ॥ १ ॥
न क्रमेण विना शास्त्रं न शास्त्रेण विना क्रमः ।
शास्त्रं क्रमयुतं ज्ञात्वा यः करोति स सिद्धिभाक् ॥ २ ॥
आचार्यो ज्ञानवान्दक्षो रसशास्त्रविशारदः ।
मन्त्रसिद्धो महावीरो निश्चलः शिववत्सलः ॥ ३ ॥
देवीभक्तः सदाधीरो देवतायागतत्परः ।
सर्वाम्नायविशेषज्ञः कुशलो रसकर्मणि ॥ ४ ॥
एवं लक्षणसंयुक्तो रसविद्यागुरुर्भवेत् ।
गुरुभक्ताः सदाचाराः सत्यवन्तो दृढव्रताः ॥ ५ ॥
निरालस्याः स्वधर्मज्ञाः सदाऽऽज्ञापरिपालकाः ।
दम्भमात्सर्यनिर्मुक्ताः कुलाचारेषु दीक्षिताः ॥ ६ ॥
अत्यन्तसाधकाः शान्ता मन्त्राराधनतत्पराः ।
इत्येवंलक्षणैर्युक्ताः शिष्याः स्युः कार्यसिद्धये ॥ ७ ॥
सहायाः सोद्यमास्तत्र यथा शिष्यास्ततोऽधिकाः ।
कुलीनाः स्वामिभक्ताश्च कर्तव्या रसकर्मणि ॥ ८ ॥
नास्तिका ये दुराचाराश्चुम्बका गुरुतोऽपरात् ।
विद्यां ग्रहीतुमिच्छन्ति चौर्यच्छद्मखलोत्सवात् ॥ ९ ॥
न तेषां सिध्यते किंचिन्मणिमन्त्रौषधादिकम् ।
कुर्वन्ति यदि मोहेन नाशयन्ति स्वकं धनम् ॥ १० ॥
इह लोके सुखं नास्ति परलोके तथैव च ।
तस्माद्भक्तिबलादेव संतुष्यति यथा गुरुः ॥ ११ ॥

---

१ ध. ठ. ढ. विशोषयेत् । ट. निरोधयेत् । २ क. पश्चादुद्धृत्य । ३ ग. समारोप्य । ४ ख. °सिद्धो म° । ५ ग. शिक्षिता. । ६ ग. °स्यु सुताशि° । ७ क. चौर्याच्छ° ।

तदा शिष्येण [1]संग्राह्या रसविद्याऽऽत्मसिद्धये ।
हस्तमस्तकयोगेन वरं लब्ध्वा [2]सुसाधयेत् ॥ १२ ॥
आतङ्करहिते देशे धर्मराज्ये मनोरमे ।
उमामहेश्वरोपेते समृद्धे नगरे शुभे ॥ १३ ॥
कर्तव्यं साधनं तत्र रसराजस्य धीमता ।
अत्यन्तोपवने रम्ये चतुर्द्वारोपशोभिते ॥ १४ ॥
तत्र शाला प्रकर्तव्या सुविस्तीर्णा मनोरमा ।
सम्यग्वातायनोपेता दिव्यचित्रैर्विचित्रिता ॥ १५ ॥
तत्समीपे समे दीप्ते कर्तव्यं रसमण्डपम् ।
अतिगुप्तं सुविस्तीर्णं कपाटार्गलशोभितम् ॥ १६ ॥
ध्वजच्छत्रवितानाढ्यं पुष्पमालाविलम्बितम् ।
[6]भेरिकाहलघण्टादिशृङ्गीनादविनादितम् ॥ १७ ॥
शुः सभा तत्र कर्तव्या सुदृढा दर्पणोपमा ।
तन्मध्ये वेदिका रम्या कर्तव्या लक्षणान्विता ॥ १८ ॥
निष्कत्रयं हेमपत्रं रसेन्द्रं नवनिष्ककम् ।
अम्लेन मर्दयेद्यामं तेन लिङ्गं तु कारयेत् ॥ १९ ॥
दोलायन्त्रे सारनाले जम्बीरस्थं दिनं पचेत् ।
तल्लिङ्गं पूजयेत्तत्र सुशुभैरुपचारकैः ॥ २० ॥
लिङ्गकोटिसहस्रस्य यत्फलं सम्यगर्चनात् ।
तत्फलं कोटिगुणितं रसलिङ्गार्चनाद्भवेत् ॥ २१ ॥
ब्रह्महत्यासहस्राणि गोहत्या अयुतानि च ।
तत्क्षणाद्विलयं यान्ति रसलिङ्गस्य दर्शनात् ॥ २२ ॥
स्पर्शनात्प्राप्यते मुक्तिरिति सत्यं शिवोदितम् ।
आग्नेय्यां श्रीमघोरेण मन्त्रराजेन चार्चयेत् ॥ २३ ॥
अष्टादशभुजं शुभ्रं पञ्चवक्त्रं त्रिलोचनम् ।
प्रेतारूढं नीलकण्ठं रसलिङ्गं विचिन्तयेत् ॥ २४ ॥
तस्योत्सङ्गे महादेवीमेकवक्त्रां चतुर्भुजाम् ।
अक्षमालाङ्कुशं दक्षे वामे पाशाभयं शुभम् ॥ २५ ॥
दधतीं तप्तहेमाभां पीतवस्त्रां विभावयेत् ॥ २६ ॥

---

१ ड. तथा । २ क ड. ट ग ग्राह्या । ३ ख सुसंधयेत । ड. सुसाधयेत् । ४ ग. °रुणोपशोभितम् । ५ ड. °निष्करम् । ६ ख भेरीमृदङ्गघण्टादि दिगं । ड. भेरीमृदङ्ग । ७ ख मीनो- द्यपुत्र द । ८ ट °वापवुं । ड. °प्तवपुं । ९ ड. अहर्रु ।

अथ मन्त्रः—वाङ्मयी श्रीः कामराजशक्तिर्बीजं रसाङ्कुशा ।
यैः समा द्वादशाः शैवज्ञेया विद्या रसाङ्कुशा ॥ २७ ॥
अनया पूजयेद्देवीं गन्धपुष्पाक्षतादिभिः ।
नन्दीभृङ्गीमहाकालकुलीराः पूर्वदिक्क्रमात् ॥ २८ ॥
पूजयेन्नाममन्त्रैस्तु प्रणवादिनमोन्तकैः ।
एवं नित्यार्चनं तत्र कर्तव्यं रससिद्धये ॥ २९ ॥
रसविद्या शिवेप्रोक्ता दातव्या साधकाय वै ।
यथोक्तेन विधानेन गुरुणा मुदितात्मना ॥ ३० ॥
सुमुहूर्ते सुनक्षत्रे चन्द्रताराबलान्विते ।
कलशं तोयसंपूर्णं हेमरत्नफलैर्युतम् ॥ ३१ ॥
स्थापयेद्रसलिङ्गाग्रे दिव्यवस्त्रेण वेष्टितम् ।
गन्धपुष्पाक्षतैर्धूपैर्नैवेद्यैश्च सुपूजयेत् ॥ ३२ ॥
पूजान्ते हवनं कुर्याद्योनिकुण्डे सुलक्षणे ।
तिलाज्यैः पायसैः पुष्पैः शतपुष्पादिकैः पृथक् ॥ ३३ ॥
अघोरेण रसाङ्कुश्या होमान्ते शिष्यमाह्वयेत् ।
कालिनी शक्तिसंयुक्ता रससिद्धिपरायणा ॥ ३४ ॥
यस्यास्तु कुञ्चिताः केशाः श्यामा या पद्मलोचना ।
सुरूपा तरुणी भिन्ना विस्तीर्णजघना शुभा ॥ ३५ ॥
संकीर्णहृदया पीनस्तनभारेण * नम्रिता ।
चुम्बनालिङ्गनस्पर्शकोमला मृदुभाषिणी ॥ ३६ ॥
अश्वत्थपत्रसदृशयोनिदेशसुशोभिता ।
कृष्णपक्षे पुष्पवती सा नारी कालिनी स्मृता ॥ ३७ ॥
रसबन्धे प्रयोगे च उत्तमा सा रसायने ।
तदभावे सुरूपा तु या काचित्तरुणाङ्गना ॥ ३८ ॥

---

* नामिता ( साधीयान् ),

---

१क. वाङ्मयीं । ग. वाङ्मयथी । ङ. वाङ्माया श्री कामराजशक्तिर्बीजरसाङ्कुश । यैनमो द्वादशार्णेषा ज्ञेया त्रिया रसाङ्कुशी ॥ २७ ॥ २ ग. °राजाख्यशक्ति° । ज. °राजाच्छक्ति° । ३ ज. °बीजरसाङ्कुशा. । ४ घ. °ङ्कुशा । ५ क. यः । ६ ग. द्वादशार्णा च ज्ञेया° । ७ घ. शैव ज्ञेया । ८ ग. °महा-शि° । ज. °स शिक्षा नि° । ९ क. वाचन । च. वाद्दा । १० घ. सुलक्षणे । ११ ग. ज. °ङ्कुशे हो° । १२ ग. घ. ङ. ज. कान्तीशक्तिसंयुक्त रससिद्धिपरायणम् । ज. कान्तिनी ।

तस्या देयं त्रिसप्ताहं गन्धकं घृतसंयुतम् ।
कर्षैकैकं प्रभाते तु सा भवेत्कोलिनीसमा ॥ ३९ ॥
एवं शक्तियुतो योऽसौ दीक्षयेत्तं गुरूत्तमः ।
सुस्नातमभिषिञ्चेत मन्त्रेण कलशोदकैः ॥ ४० ॥
अघोरामङ्कुशीं विद्यां दद्याच्छिष्याय सद्गुरुः ।
यथाशक्त्यो सुशिष्येण दातव्या गुरुदक्षिणा ।
अथाऽऽज्ञया गुरोर्मंत्रं लक्षं लक्षं पृथक् जपेत् ॥ ४१ ॥
ॐ ह्रां ह्रीं हूं अघोरतरमस्फुट २ प्रकट २
कह २ शमय २ जात २ दह २ पातय २
ॐ ह्रीं हें ह्रौं हूं अघोराय फट् इममघोरमंत्रं ॥
ॐ कामराजशक्तिवीजरसाङ्कुशाये आज्ञैया विद्यां रसाङ्कुशाम् ॥
अनया पूजयेद्देवीमिमां कुशविद्याम् ।
दशांशेन हुनेत्कुण्डे त्रिकोणे हस्तमात्रके ।
जातिपुष्पं त्रिमध्वक्तं पूर्णान्ते कन्यकार्चनम् ॥ ४२ ॥
कृत्वाऽथ प्रविशेच्छालां शुद्धां लिप्तां सवेदिकाम् ।
पट्टोणं मण्डलं तत्र सिन्दूरेण द्विहस्तकम् ॥ ४३ ॥
वेदिकायां लिखेत्सम्यक्तद्वदिशाष्टपत्रकम् ।
कमलं चतुरस्रं च चतुर्द्वारैः सुशोभितम् ॥ ४४ ॥
कर्णिकायां न्यसेत्खल्वं लोहजं स्वर्णलेखितम् ।
तन्मध्ये रसराजं तु पलानां शतमात्रकम् ॥ ४५ ॥
पश्चाशत्पञ्चविंशद्वा पूजयेद्रसलिङ्गवत् ।
वज्रवैक्रान्तवज्राभ्रकान्तपापाणटङ्कणम् ॥ ४६ ॥
भूनागं शक्रपश्चैताः पट्पत्रे पूजयेत्क्रमात् ॥ ४७ ॥
गन्धतालकशासीमशिलाखर्परभूपणम् ।
राजावर्तो गैरिकं च ख्याता उपरसा अमी ॥
पूज्या अष्टदलेष्वेते पूर्वादीशानगं क्रमात् ॥ ४८ ॥

---

१ ग. घ. °रसाविनी° । २ ज. रक्तियमो । ३ ग. °पिबेत्तं म° । ज. °पिबेत म° । ४ ग. °अघोरम° । ५ ड. °दद्या च दि° । ६ ग. °मंत्रोऽयं स्थ पृथक्पृथक् । छ. °मंत्रे ल° । ७ ज. पुनर्नवन् । ८ क. आज्ञैपु° । ९ ग. °नागस° । ज. °नाग° ग° । १० क. °भगुन्म् । ज. °मृन्नाम् । ११ ड. °दलेष्वेते । १२ ग. °दीनां दिशो च° । १३ ग. °नगत° ।

रसकं विमला ताप्यं चपला तुत्थमञ्जनम् ।
हिङ्गुलं सस्यकं चैव ख्याता एते महारसाः ॥ ४९ ॥
पूर्वादीशानपर्यन्तं पत्राग्रेषु मपूजयेत् ।
पूर्वद्वारे स्वर्णरूप्ये दक्षिणे ताम्रसीसके ॥ ५० ॥
पश्चिमे वज्रकान्तौ च उत्तरे मुण्डतीक्ष्णके ।
सर्वमेतदघोरेण पूजयेदङ्कुशान्वितम् ॥ ५१ ॥
विढं काञ्जिकयन्त्राणि क्षारमृल्लवणानि च ।
कोष्ठी मूषा वङ्कनाली तुषाङ्गारवनोत्पलाः ॥ ५२ ॥
भस्त्रिका दण्डिकानेका शिलाखल्वान्युलूखलम् ।
स्वर्णकारोपकरणं समस्ततुलनानि च ॥ ५३ ॥
मृत्काष्ठताम्रलोहोत्थपात्राणि विविधानि च ।
दिव्यौषधादिवर्गाश्च रञ्जकस्नेहनानि च ॥ ५४ ॥
एतानि द्वारबाह्ये तु मूलमन्त्रेण पूजयेत् ।
वाङ्मयी ह्रीं ततः क्षें च क्ष्मश्च पञ्चाक्षरो मनुः ॥ ५५ ॥
अनेन मूलमन्त्रेण भैरवं तत्र पूजयेत् ।
सर्वेषां रससिद्धानां नाम संकीर्तयेत्तदा ॥ ५६ ॥
*व्यालाचार्यश्चन्द्रसेनः सुबुद्धिर्नरवाहनः ।
नागार्जुनो रत्नघोषः सुरानन्दो यशोधनः ॥ ५७ ॥
इन्द्रेधूमश्च माण्डव्यश्चर्पटिः सूरसेनकः ।
आगमो नागबुद्धिश्च खण्डः कापालिको मतः ॥ ५८ ॥
कामारिस्तान्त्रिकः शंभुर्लङ्को लम्पटशारदौ ।
बाणासुरो मुनिश्रेष्ठो गोविन्दः कपिलो बलिः ॥ ५९ ॥
एते सर्वे तु राजेन्द्रा रससिद्धा महाबलाः ।
चरन्ति सर्वलोकेषु नित्या भोगपरायणाः ॥ ६० ॥
सप्तविंशतिसंख्याका रससिद्धिप्रदायकाः ।
वन्द्याः पूज्याः प्रयत्नेन ततः कुर्याद्रसार्चनम् ॥ ६१ ॥

---

* व्यालाचा° (साधीयान्)

१ ड. °शान्यप° । २ च. पत्राद्वेषु । ३ क स्वर्णरौप्ये । ४ क. °वयन्त्राणि । ५ ड. °नालतु° । ६ ग. °नोपटा° । ७ ड. °दशिका° । ८ °नेका. शि° । (साधीयान्) ९ अ. °पधानो वर्गश्च । १० क. वाङ्मयी ह्री ततः क्षेंच क्ष्मश्च । ड. वाङ्माया ह्री तत क्ष्म च क्ष्मश्च । ट. वाङ्माया ह्रीं ततः क्ष च क्ष्मश्च । ११ ड. °न्द्रगुप्तश्च । १२ ख. °र्पटी सूर° । ड. °र्पटः सूर° । १३ ड. आदमो° । ड. आदमो । १४ ग. लिरः परः । १५ क. °मारिः सात्विकः । अ. °मारिस्तात्विकः । १६ ग. °र्लङ्गाल° । १७ क. सूतेन्द्रा । ड. भूपेन्द्रा । १८ ग. °सिद्धिप° । १९ ग. नित्यभो° । ड. नित्य भो° । २० अ. वंद्याः ।

हर्षयेन्द्विजदेवानां तर्पयेदिष्टदेवताः ।
कुमारीयोगिनीयोगीश्वरान्मेलकसाधकान् ॥ ६२ ॥
तर्पयेत्पूजयेद्भक्त्या यथाशक्त्यनुसारतः ॥ ६३ ॥
इत्येवं सर्वसंभारयुक्तं कुर्याद्रसोत्सवम् ।
सर्वविघ्नप्रशान्त्यर्थं सर्वेप्सितफलप्रदम् ॥ ६४ ॥
अन्यथा यो विमूढात्मा मन्त्रदीक्षाक्रमाद्विना ।
कर्तुमिच्छति सूतस्य साधनं गुरुवर्जितः ॥ ६५ ॥
नासौ सिद्धिमवाप्नोति यत्नकोटिशतैरपि ।
तस्मात्सर्वप्रयत्नेन शास्त्रोक्तां कारयेत्क्रियाम् ॥ ६६ ॥
सम्यक्साधनसोद्यमा गुरुयुता राजाज्ञयाऽलंकृता
नानाकर्मपराङ्मुखा रसपरीक्षाढ्या जनैश्चार्थिताः ।
मात्रायन्त्रसुपाककर्मकुशलाः सर्वौषधे कोविदा-
स्तेषां सिध्यति नान्यथा विधिवशात्सूरीपारदःपारदः॥६७॥
रसशास्त्रं प्रदातव्यं विप्राणां धर्महेतवे ।
राज्ञे वैश्याय वृद्ध्यर्थं दास्यार्थमितरस्य च ॥ ६८ ॥
गुरौ तुष्टे शिवस्तुष्येच्छिवे तुष्टे रसस्तथा ।
रसे तुष्टे क्रियाः सर्वाः सिध्यन्त्येव न संशयः ॥ ६९ ॥
रसविद्या दृढं गोप्या मातुर्गुह्यमिव ध्रुवम् ।
भवेद्वीर्यवती गुप्ता निर्वीर्या च प्रकाशनात् ॥ ७० ॥
न रोगिविदितं कार्यं बहुभिर्विदितं तथा ।
रोगिणां बहुभिर्ज्ञातं भवेन्निर्वीर्यमौषधम् ॥ ७१ ॥ ८०९ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये शिष्योपनयनं नाम षष्ठोऽध्यायः ॥ ६ ॥

---

## अथ सप्तमोऽध्यायः ।

### [ अथ रसशाला । ]

रसशालां प्रकुर्वीत सर्वबाधाविवर्जिताम् ।
सर्वौषधमये देशे रम्ये कूपसमन्विते ॥ १ ॥

---

१ क. ख. °शाल्मेच्छक° । २ घ. °ग वैद्य ज° । ३ ट. °श्चार्थिनः ॥ ४ च °र्थः सौ° । ५ ग. रोगि— । ६ ट. °शिते । ७ क. स्मृत° ।

यक्षत्र्यक्षां सहस्राक्षां दिग्विभागे सुशोभने ।
नानोपकरणोपेतां प्राकारेण सुशोभिताम् ॥ २ ॥
शालायाः पूर्वदिग्भागे स्थापयेद्रसभैरवम् ।
वह्निकर्माणि चाग्नेये याम्ये पाषाणकर्म च ॥ ३ ॥
नैर्ऋत्ये शस्त्रकर्माणि वारुणे क्षालनादिकम् ।
शोषणं वायुकोणे च वेधकर्मोत्तरे तथा ॥ ४ ॥
स्थापनं सिद्धवस्तूनां प्रकुर्यादीशकोणके ।
पदार्थसंग्रहः कार्यो रससाधनहेतुकः ॥ ५ ॥
सत्त्वपातनकोष्ठीं च क्षरत्कोष्ठीं सुशोभनाम् ।
भूमिकोष्ठीं चलत्कोष्ठीं जलद्रोण्योऽप्यनेकशः ॥ ६ ॥
भस्त्रिकायुगलं तद्वन्नालिके पङ्कलोहयोः ।
स्वर्णायोघोपशुल्वाश्मकुण्ड्यश्मकृतां तथा ॥ ७ ॥
करणानि विचित्राणि द्रव्याण्यपि समाहरेत् ।
कण्डणी पेषणी खल्वा द्रोणीरूपाश्च वर्तुलाः ॥ ८ ॥
आयसास्तप्तखल्वाश्च मर्दकाश्च तथाविधाः ।
सूक्ष्मच्छिद्रसहस्राढ्या द्रव्यगालनहेतवे ॥ ९ ॥
चालनी च *कटत्राणि शलाका हि च कुण्डनी ।
चालनी त्रिविधा प्रोक्ता तत्स्वरूपं च कथ्यते ॥ १० ॥
वैणवीभिः शलाकाभिर्निर्मिता ग्रथिता गुणैः ।
कीर्तिता सा सदा स्थूलद्रव्याणां गालने हिता ॥ ११ ॥
चूर्णचालनहेतोश्च चालन्यन्योपि वंशजा ।
कर्णिकारस्य शाल्मल्या हरिजातस्य कम्बया ॥ १२ ॥
चतुरङ्गुलविस्तारयुक्तया निर्मिता शुभा ।
कुण्डल्यरत्निविस्तारा छागचर्माभिवेष्टिता ॥ १३ ॥
वाजिवालाम्बरानद्धतला चालनिका परा ।
तया प्रचालनं कुर्याद्धतुं सूक्ष्मतरं रजः ॥ १४ ॥

* कटत्राणानि कथायितचर्मखण्डानि ।

१ क. यक्षअक्षसहस्राक्षादि । ख. यक्षाजसहस्राक्षादि । ग. ध्राक्षा त्र्य । ङ. ध्राक्षत्र्यक्षसहस्राक्षादि । ज. ध्राक्ष्या अक्ष्या । २ घ. नात्र्यादीशानतो । ३ क. कुराकोष्ठीं । घ. गारकोष्ठीं । ङ. अरारोष्ठीं । छ. गुराकोष्ठीं । ४ ख. कोष्ठीं चलत्कोष्ठीं ज । ५ ङ. तद्वन्नलिके वङ्गलोहयो । ६ ग. स्मकुण्ड्यर्म । ७ क. वण्डनी । ङ. खण्डानपे । ८ ज फण्त्राणि । ९ ङ वाभिश्च खण्डनी । १० क. हा च । ज. हिश्च । ११ ख. कुण्डनी । ज. फण्डनी १२ ख. न्यानिर्दविना । १३ ज यन्ना गा । १४ ङ. मांदिते ।

मूषामृत्तुपकार्पासवनोपलकपिष्टकम् ।
त्रिविधं भेषजं धातुजीवमूलमयं तथा ॥ १५ ॥
शिखित्रा गोवरं चैव शर्करा च शितोपला ।
शिखित्राः पावकोच्छिष्टा अङ्गाराः कोकिला मताः ॥ १६ ॥
कोकिलाश्चेतिताङ्गारा निर्वाणाः पयसा विना ।
पिष्टकं छगणं छाणमुपलं चोत्पलं तथा ॥ १७ ॥
गिरिण्डोपलसोठी च संशुष्कच्छगणाभिधाः ।
काचायोमृद्वराटानां कूपिकाचपकानि च ॥ १८ ॥
कूपिका कुपिका सिद्धा गोला चैव गिरिण्डिका ।
चपकं च कटोरी च वाटिका खारिका तथा ॥ १९ ॥
कच्चोली ग्राहिका चेति नामान्येकार्थकानि हि ।
शूर्पादिवेणुपात्राणि क्षुद्राक्षिमाश्च शैङ्किकाः ॥
क्षुरमाश्च तथा पौक्यो यच्चान्यत्तत्र युज्यते ॥ २० ॥
पालिका कॅणिका चैव शाकच्छेदनशस्त्रकाः ।
शालासंमार्जनाद्यं हि रसपाकान्तकर्म यत् ॥ २१ ॥
तत्रोपयोगि यच्चान्यत्तत्सर्वं पैरविद्यया ।
श्रीरसाङ्कुशया सर्वं मन्त्रयित्वा समाचरेत् ॥ २२ ॥
अन्यथा तद्गतं तेजः परिर्ह्लन्ति भैरवाः ।
रससंहितया वैद्या निघण्टुज्ञाश्च वार्तिकाः ॥ २३ ॥
सर्वदेशजभोपज्ञाः संग्राह्यास्तेऽपि सौधकैः ।
रसपाकावसानं हि सदा घोरं च जापयेत् ॥ २४ ॥
सोद्यमाः शुचयः शूरा बलिष्ठाः परिचारकाः ।
धर्मिष्ठः सत्यवाग्विद्वाञ्शिवकेशवपूजकः ॥ २५ ॥
सदयः पद्महस्तश्च स योज्यो रसवैद्यके ।
पताकाकुम्भपाथोजमत्स्यचापाङ्कपाणिकः ॥ २६ ॥

---

१ ङ. °नोत्पल°। २ ख. °ज साधुर्जं°। ३ ख. गोवर। ४ ङ. मिनोपला। ५ ङ. छागण। छ. छगल। ६ घ. °साठी च। ङ. °सार्गी च। छ. °साठीय स°। ७ ज. °भिधा। ८ ग. मुरिका। ९ ङ कम्बोली। १० ङ. क्षुद्रक्षिप्राश्च शङ्खिका। ११ ख. शाङ्किकाः। १२ ङ. क्षुरयाश्च। ज. क्षुरपाश्च। १३ ङ. शक्यो। १४ ङ. वर्निका। ज. घृचिका। १५ क. °लाया मा°। १६ क. परिति°। १७ घ समर्चयेत्। १८ ङ. °गृह्णाति भैरवः। १९ ग. °समन्वितया वै°। घ. °मसहितयो वै°। २० घ भागाशाः। २१ ङ. साध्यका।

अनामाग्रस्थरेखाङ्कः स स्यादमृतहस्तवान् ।
अदैष्टिकः कृपामुक्तो लुब्धो गुरुविवर्जितः ॥ २७ ॥
कृष्णरेखाकरो वैद्यो दग्धहस्तो विवर्जितः ।
भूतनिग्रहमन्त्रज्ञास्ते योज्या निधिसाधने ॥ २८ ॥
बलिष्ठाः सत्यवन्तश्च रक्ताक्षाः कृष्णविग्रहाः ।
भूतत्रासनविद्याश्च ते योज्या बलिसाधने ॥ २९ ॥
निर्लोभाः सत्यवक्तारो देवब्राह्मणपूजकाः ।
यमिनः पथ्यभोक्तारो योजनीया रसायने ॥ ३० ॥
धनवन्तो वदान्याश्च सर्वोपस्करसंयुताः ।
गुरुवाक्यरता नित्यं धातुवादेषु ते शुभाः ॥ ३१ ॥
तत्तदौषधनामज्ञाः शुचयो वञ्चनोज्झिताः ।
नानाविषयभाषज्ञास्ते मता भेषजाहृतौ ॥ ३२ ॥
शुचीनां सत्यवाक्यानामास्तिकानां मनस्विनाम् ।
संदेहोज्झितचित्तानां रसः सिध्यति सर्वदा ॥ ३३ ॥
दशाष्टक्रियया सिद्धो रसोऽसौ साधकोत्तमः ।
हा रसो नष्ट इत्युक्त्वा सेवेतान्यत्र तं रसम् ॥ ३४ ॥
रससिद्धो भवेन्मर्त्यो दाता भोक्ता न याचकः ।
जरामुक्तो जगत्पूज्यो दिव्यकान्तिः सदा सुखी ॥ ३५ ॥८४४॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये रसशालाप्रकरणं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

अथाष्टमोऽध्यायः ।

*[ अथ परिभाषा । ]*

कथ्यते सोमदेवेन मुग्धवैद्यप्रवुद्धये ।
परिभाषा रसेन्द्रस्य शास्त्रैः सिद्धैश्च भाषिता ॥ १ ॥
अर्धं सिद्धरसस्य तैलघृतयोर्लेहस्य भागोऽष्टमः
संसिद्धाखिललोहचूर्णवटकादीनां तथा सप्तमः ।
यो दीयेत भिषग्वराय गदिभिर्निर्दिश्य धन्वन्तरिं
सर्वारोग्यसुखाप्तये निगदितो भागः *स धन्वन्तरेः ॥ २ ॥

---

* ■ एवाश्विनीकुमारभाग° ।

---

१ अ अदैशिक° । २ ख °रेखक° । ३ ङ °हस्त स उच्यते । ४ ग सत्त्ववन्तश्च । ५ ङ. °प-स्कार° । ६ घ ङ. °भाषाज्ञास्ते । ७ घ सिद्धे रसोऽसौ° । ८घ. महारसोऽष्ट इत्युक्ता मोनाऽन्य° । ९ ख. ङ ङ °त्युक्त्वा से° । १० ख. जरोन्मुक्तो । ११ ख. शास्त्रे । १२ ग °णगुटिका° ।

[ क्षेपकः । भैषज्यंक्रीणितद्रव्यभागोऽप्येकादशो हि यः ।
वणिग्भ्यो गृह्यते वैद्यै रुद्रभागः स उच्यते ॥ ३ ॥
प्रगृह्याधिकरुद्रांशं योऽसमीचीनमौषधम् ।
दापयेल्लुब्धधीर्वैद्यः स स्याद्विश्वासघातकः ॥ ४ ॥
धातुभिर्गन्धकाद्यैश्च निर्द्रवैर्मर्दितो रसः ।
सुश्लक्ष्णः कज्जलाभोऽसौ कज्जलीत्यभिधीयते ॥ ५ ॥
सद्रवा मर्दिता सैव रसपङ्क इति स्मृतः ॥ ६ ॥
अर्कांशतुल्याद्रसतोऽथ गन्धान्निष्कार्धतुल्यात्सुदिशोऽभिखल्वे ।
अर्कातपे तीव्रतरे विमर्द्या पिष्टी भवेत्सा नवनीतरूपा ॥ ७ ॥
खल्वे विमर्द्य गन्धेन दुग्धेन सह पारदम् ।
पेषणात्पिष्टतां याति सा पिष्टीति मता परैः ॥ ८ ॥
चतुर्थांशसुवर्णेन रसेन घृष्टपिष्टिका ।
भवेत्पातनपिष्टी सा रसस्योत्तमसिद्धिदा ॥ ९ ॥
रूप्यं वा जातरूपं वा रसगन्धादिभिर्हतम् ।
समुत्थितं च बहुशः सा क्रौंची हेमतारयोः ॥ १० ॥
क्रौञ्च्यां [11]क्षिपेत्सुवर्णान्तर्न वर्णो हीयते तया ।
स्वर्णक्रौञ्च्या कृतं बीजं रसस्य परिरञ्जनम् ॥ ११ ॥
ताम्रं तीक्ष्णसमायुक्तं द्रुतं निक्षिप्य भूरिशः ।
सगन्धलकुचद्रावे निर्गतं वरलोहकम् ॥ १२ ॥
तेन रक्तीकृतं स्वर्णं हेमरक्तीत्युदाहृतम् ।
निक्षिप्ता सा द्रुते स्वर्णे वर्णोत्कर्षविधायिनी ॥ १३ ॥
तारस्य रञ्जनी चापि बीजरागविधायिनी ।
एवमेव प्रकर्तव्याताररक्ती मनोहरा ॥
रञ्जनी खलु रूप्यस्य बीजानामपि रञ्जनी ॥ १४ ॥
मृतेन वा बद्धरसेन वाऽन्यल्लोहेन वा साधितमन्यल्लोहम् ।
[21]सितं च पीतत्वमुपागतं तद्दलं हि चन्द्रार्कयोः प्रसिद्धम् ॥१५॥

१ घ. °उत्रिनद्रव्ये भागो । २ ग. °नित द्रव्य भा° । ३ घ. ह. °द्रव्ये भागभेदा° । ४ ग. °सतास्यगन्धा° । छ. °मसोऽयम° । ज. °मसोयम° । ५ क. °तुल्यतुष्टि ग. °तुल्यात्तुटि° । ह. तुल्यान्तुटि° । ६ ग. घ. °मर्दात्तपिष्टी° । ७ ज. °ष्टी रविका । ८ ह. स्मस्य कूर्णाति° । ९ ग. °न कूर्णाति° । छ. °न पूर्णाति° । १० ह. कृष्णा । ११ क. कृष्णी । १२ ह. क्षिप्ता सुव° । १३ क. तया । १४ ह. °कूर्णाद्य° । १५ ज सूत । १६ घ. ह. °गन्धे ल° । १७ घ. ह. °रक्तीकृतं । १८ घ. ठ. °रक्तीयु° । १९ ह. °दाहृता । २० ह मिते । २१ घ. ह. °रक्ता म° । २२ घ. मित ।

आवासकृतवेद्धेन रसेन सह योजितम् ।
साधितं वाऽन्यलोहेन सितं पीतं च तद्दलम् ॥ १६ ॥
माक्षिकेण हतं ताम्रं दशवारं समुत्थितम् ।
तद्वद्विशुद्धनागं हि द्वितयं तच्चतुष्पलम् ॥ १७ ॥
नीलाञ्जनहतं भूयः सप्तवारं समुत्थितम् ।
इति संशुद्धिमेतद्धि शुल्बनागं प्रकीर्त्यते ॥ १८ ॥
साधितस्तेन सूतेन्द्रो वदने विधृतो नृणाम् ।
निहन्ति मासमात्रेण मेहव्यूहं विशेषतः ॥ १९ ॥
पथ्याशनस्य वर्षेण पलितं वलिभिः सह ।
दृप्तदृष्टिर्बलैस्तुष्टिः सर्वारोग्यसमन्वितः ॥ २० ॥
लोहं लोहान्तरे क्षिप्तं ध्मातं निर्वापितं द्रवे ।
पाण्डुपीतप्रभं जातं विञ्जरीत्यभिधीयते ॥ २१ ॥
भागाः षोडश तारस्य तथा द्वादश भास्वतः ।
एकत्राऽऽवर्तितास्तेन चन्द्रार्कंप्यपि कथ्यते ॥ २२ ॥
साध्यलोहेऽन्यलोहं चेत्प्रक्षिप्तं वङ्कनालतः ।
निर्वापणं तु तत्प्रोक्तं वैद्यैर्निर्वाहणं खलु ॥ २३ ॥
क्षिपेन्निर्वापणं द्रव्यं निर्वाहे समभागिकम् ।
आवाह्यं वापनीये च भाव्ये दृष्टे च दृष्टवत् ॥ २४ ॥
मृतं तरति यत्तोये लोहं वारितरं हि तत् ।
अङ्गुष्ठतर्जनीघृष्टं यत्तद्रेखान्तरे विशेत् ॥ २५ ॥
मृतलोहं तदुद्दिष्टं रेखापूर्णाभिधानतः ॥ २६ ॥
गुडगुञ्जासुखस्पर्शमध्वाज्यैः सह योजितम् ।
नाऽऽयाति प्रकृतिं ध्मानादपुनर्भवमुच्यते ॥ २७ ॥
तस्योपरि गुरु द्रव्यं धान्यं चोपनयेद्ध्रुवम् ।
हंसवत्तरितं वारिण्यूनमं परिकीर्तितम् ॥ २८ ॥
रौप्येण सह संयुक्तं ध्मातं रौप्येण चेल्लगेत् ।
तदा निरुत्थमित्युक्तं लोहं तदपुनर्भवम् ॥ २९ ॥

---

१ ङ. आमाम°। २ ङ. °ब-धेन। ३ ख. °शुद्ध ना°। ४ ङ समिद्धम°। ५ ग क्षणमात्रेण। ६ ङ. व्यूहमशे°। ७ ग °ष्टिस्त°। ८ ज जलम्। ९ ङ. °त पत्र°। १० क. पिण्डरी°। ११ क ठ ङ. °र्कमिति क°। १२ ख °देन लो°। १३ क. °न्यलोहे चे°। १४ ख °र्वापण। १५ ङ °र्वाहणे द्रव्ये निर्वाहे स°। १६ क °पणद°। १७ ख. निर्वाहे। १८ क आवाह्य ङ. आवाप्य। १९ क तत्तोये। २० ग. पद। २१ ख. °द्रेखान्तर वि°। २२ क. मृत लो°। २३ क. गुरुगु°।

निर्वापणविशेषेण तत्तद्वर्णं भवेद्यदा ।
मृदुलं चित्रसंस्कारं तद्बीजमिति कथ्यते ॥ ३० ॥
इदमेव विनिर्दिष्टं वैद्यैरुत्तरणं खलु ।
संस्पृष्टलोहयोरेकलोहस्य परिसाधनम् ।
प्रध्मातं वङ्कनालेन तत्ताडनमुदाहृतम् ॥ ३१ ॥
चूर्णाभ्रं शालिसंयुक्तं वस्त्रबद्धं हि काञ्जिके ।
निर्यातं मर्दनाद्वस्त्राद्धान्याभ्रमिति कथ्यते ॥ ३२ ॥
क्षाराम्लद्रावकैर्युक्तं ध्मातमाकरकोष्ठके ।
यस्ततो निर्गतः सारः सत्त्वमित्यभिधीयते ॥ ३३ ॥
कोष्ठिकाशिखरापूर्णैः कोकिलैर्ध्मानयोगतः ।
मूषाकण्ठमनुप्राप्यैरेकैककोलीसको मतः ॥ ३४ ॥
द्रावणे सत्त्वपाते च माधुकाः खादिराः शुभाः ।
निर्द्रवे वङ्कजास्ते तु स्वेदने बादराः शुभाः ॥ ३५ ॥
विद्याधराख्ययन्त्रस्थादार्द्रकद्रावमर्दितात् ।
समाकृष्टो रसो योऽसौ हिङ्गुलाकृष्ट उच्यते ॥ ३६ ॥
स्वल्पतालयुतं कांस्यं वङ्कनालेन ताडितम् ।
मुक्तरङ्गं हि तच्चाम्रं घोषाकृष्टमुदाहृतम् ॥ ३७ ॥
तीक्ष्णं नीलाञ्जनोपेतं ध्मातं हि बहुशो दृढम् ।
मृदुकृष्णं द्रुतद्रावं वरं नागं तदुच्यते ॥ ३८ ॥
मृतस्य पुनरुद्भूतिः संप्रोक्तोत्थापनाख्यया ।
द्रुतद्रव्यस्य निक्षेपो द्रवे तद्वालनं मतम् ॥ ३९ ॥
त्रिंशत्पलमितं नागं भानुदुग्धेन मर्दितम् ।
विमर्द्य पुटयेत्तावद्यावत्कर्षावशेषितम् ॥ ४० ॥
न तत्पुटसहस्रेण क्षयमायाति सर्वथा ।
चपलोऽयं समादिष्टो वार्तिकैर्नागसंभवः ॥ ४१ ॥
इत्थं हि चपलः कार्यो वङ्गस्यापि न संशयः ।
तत्स्पृष्टहस्तसंस्पृष्टः केवलो बध्यते रसः॥ ४२ ॥

१ ट. °वांहण°। २ ट. °स्ताए°। ३ ग. समृट°। ४ क. परिनाशनम् । ५ क. °प्रांतो°। ६ ट. °वनाप्रिराशो। ७ क. माधुरा.। ८ क. दुर्शने वङ्कनाले तु। ९ ट. °यद्रव°। १० ख. मृतदर्दिते तावं। ग. मृतगन्ध। ११ क. तीक्ष्णनी°। १२ क °कृष्टद्रु°। ज. °कृष्ट द्रु°। १३ क. ररना°। १४ ग. °वेत्तरदा°। १५ क. विमृष। ट. विमृद्य। १६ ग. °निक्षे नाग°। १७ क. °दहनम°। ट. °दहनम°।

स रसो धातुवादेषु शस्यते न रसायने ।
अयं हि सर्वेणाख्येन लोकनाथेन कीर्तितः ॥ ४३ ॥
भूभुजङ्गशकृत्तोयैः प्रक्षाल्यापहृतं रजः ।
कृष्णवर्णं हि तत्प्रोक्तं धौताख्यं रसवादिभिः ॥ ४४ ॥
द्रव्ययोर्मर्दनाद्ध्मानाद्द्वन्द्वानं परिकीर्तितम् ।
भागाद्द्रव्याधिकक्षेपमनुवर्णसुवर्णके ॥ ४५ ॥
दैलैर्वा वह्निकाग्रासो भञ्जनी वादिभिर्मता ।
पतङ्गीकल्कतो जाता लोहेतारत्वहेमता ॥ ४६ ॥
दिनानि कतिचित्स्थित्वा यात्यसौ चुल्लका मता।
रञ्जिताद्धि चिराल्लोहाद्ध्मानाद्वा चिरकालतः ॥ ४७ ॥
विनिर्यासः स निर्दिष्टः पतङ्गीरागसंज्ञका ॥ ४८ ॥
द्रुते द्रव्यान्तरक्षेपो लोहाद्ये क्रियते हि यः ।
स आवापः प्रतीवापस्तद्वेवाऽऽच्छादनं मतम् ॥ ४९ ॥
द्रुते वह्निस्थिते लोहे विरम्याष्टनिमेषकम् ।
सलिलस्य परिक्षेपः सोऽभिषेक इति स्मृतः ॥ ५० ॥
तैलस्याप्सु विनिक्षेपो निर्वापः स्नपनं च तत् ।
प्रतीवापादिकं कार्यं द्रुते लोहे सुनिर्मले ॥ ५१ ॥
यदा हुताशो दीप्तार्चिः शुक्लोत्थानसमन्वितः ।
शुद्धावर्तस्तदा ज्ञेयः स कालः सत्त्वनिर्गमे ॥ ५२ ॥
द्राव्यद्रव्यनिभा ज्वाला दृश्यते धमने यदा ।
द्रावस्योन्मुखता सेयं बीजावर्तः स उच्यते ॥ ५३ ॥
वह्निस्थमेव शीतं यत्तदुक्तं स्वाङ्गशीतलम् ।
अग्नेराकृष्य शीतं यत्तद्बहिः शीतमीरितम् ॥ ५४ ॥
क्षाराम्लैरौषधैर्वाऽपि दोलायन्त्रे स्थितस्य हि ।
पचनं स्वेदनाख्यं स्यान्मलशैथिल्यकारकम् ॥ ५५ ॥

---

१ क. सर्पराट्येन । २ ज. कृष्ण° । ३ ग. °योर्मल्ना° । ञ. °योर्मलनं ध्मा° । ४ ग. °ध्मानाद्वन्दन । ङ. °ध्माना[illegible] । ५ ग. नागाद्व्या° । घ. भागाद्व्याधिक. क्षे° । ङ. भागाद्व्या° । ज. भोगिद्रव्या-धिके क्षे° । ट. भागाद्द्रव्याद्विरक्षेपम° । ६ क दैरैर्वा । ग. द्वन्द्वैर्वा । ७ ङ. वर्गिराद्द्रासो । ८ क. °तद्भक° । ९ ग. जातटो° । १० ज. तारे च हे° । ११ क. वल्लिका । ग. कुल्लुरा । ङ. खल्लिका । ज. फुल्लिका । ट. उदरा । १२ क. विनिर्यान° । ञ. विनिर्याति । १३ ङ. सहकः ज. सहिता । १४ ज. °देव च्छेद° । १५ [illegible] प्रतीरितः । १६ ज. तसास्वप्सु । १७ क. °वामः स° । ख. °वापश्राप° । ज. °वी-पस्तप° । १८ ङ. प्रतिरा° ।

उदितैरौषधैः सार्धं सेवाम्लैः काञ्जिकैरपि ।
पेषणं मर्दनाख्यं स्याद्बहिर्मलविनाशनम् ॥ ५६ ॥
मर्दनादिष्टभैषज्यैर्नष्टपिष्टत्वकारकम् ।
तन्मूर्छनं हि वङ्गादिभुजकञ्चुकनाशनम् ॥ ५७ ॥
स्वेदातपादियोगेन स्वरूपापादनं कृतम् ।
तदुत्थापनमित्युक्तं मूर्छाव्यापत्तिनाशनम् ॥ ५८ ॥
स्वरूपस्य विनाशेन पिष्टत्वाद्बन्धनं हि तत् ।
विह्निर्जितः सूतो नष्टपिष्टिः स उच्यते ॥ ५९ ॥
उक्तौषधैर्मर्दितपारदस्य यन्त्रस्थितस्योर्ध्वमधश्च तिर्यक् ।
निर्यापणं पातनसंज्ञमुक्तं वङ्गाहिसंपर्कजकञ्चुकघ्नम् ॥ ६० ॥
जलसैन्धवयुक्तस्य रसस्य दिवसत्रयम् ।
स्थितिरास्थापनी कुम्भे याऽसौ रोधनमुच्यते ॥ ६१ ॥
रोधनाल्लब्धवीर्यस्य चपलत्वनिवृत्तये ।
क्रियते पारदे स्वेदः प्रोक्तं नियमनं हि तत् ॥ ६२ ॥
धातुपाषाणमूलाद्यैः संयुक्तो घटमध्यगः ।
ग्रासार्थं त्रिदिनं स्वेदो दीपनं तन्मतं बुधैः ॥ ६३ ॥
इयन्मानस्य सूतस्य भोज्यद्रव्यात्मिका मितिः ।
इयतीत्युच्यते याऽसौ ग्रासमानं समीरितम् ॥ ६४ ॥
ग्रासस्य चारणं गर्भद्रावणं जारणं तथा ।
इति त्रिरूपा निर्दिष्टा जारणा वरवार्तिकैः ॥ ६५ ॥
ग्रासः पिण्डः परीणामस्तिस्रश्चारणा परा पुनः ।
समुखा निर्मुखा चेति जारणा द्विविधा पुनः ॥ ६६ ॥
निर्मुखा जारणा प्रोक्ता बीजादानेन भागतः ।
शुद्धं स्वर्णं च रूप्यं च बीजमित्यभिधीयते ॥ ६७ ॥

१ क. उदिष्टै°। २ ग. सत्वाम्लैः। ३ क. ट. ड. °र्दनोद्दिष्ट°। ट. °र्दन पिष्ट°। ४ ज. °नष्ट पि[illegible] ५ क. °टक्रा°। ६ क. हि वार्यादि°। ड. हि यत्। ७ ज पुनः। ८ क. °त्वादाधन। ड. °त्वाग[illegible] हि यत्। ज. °त्वात्साधन तु यत्। ९ ग. °ह्निर्जितसूतोऽसौ न°। ड. °ह्निर्जितसूतोऽसौ नष्टपिष्ट स। [illegible] °ह्निर्हि जित सूतो नष्टपिष्टः॥ १० ट. निर्यापण। ११ क. °श्रये। १२ क. °रास्यायनी। [illegible] °नप्यायनं घ. °राख्यायिनी। ड. °राप्यायने कु। ज. °राप्यायनी। १३ क. °तुत्रापण°। ख. °तुवापनम्°। १४ [illegible] °ध्यग.। १५ क स्वेदो। १६ ग. भोज्यैर्द्रव्यात्मिका मितिः। १७ ज. °व्यात्मका°। १८ ड. मिति [illegible] १९ ज जयन्तीत्यु°। २० ज °तऽयासौ। २१ क. °मानमिनीरितं°। २२ ट. चारण। २३ क गर्भे द्रा[illegible] २४ ड °रणि°। २५ ड. पिंडः। २६ ड. ड°.श्चारणाः प°। २७ क. ट. ड. समु°। ड. सुमु°। २८ [illegible] बीजदा°। ज. बीजाधाने°।

चतुःषष्ट्यंशतो बीजप्रक्षेपो मुखमुच्यते ।
एवं कृते रसो ग्रासलोलुपो मुखवान्भवेत् ॥ ६८ ॥
कठिनान्यपि लोहानि क्षमो भवति भक्षितुम् ।
इयं हि संमुखा प्रोक्ता जारणा मृगचारिणा ॥ ६९ ॥
दिव्यौषधिसमायोगात्स्थितः प्रकटकोष्ठिषु ।
भुञ्जीताखिललोहाद्यं योऽसौ राक्षसवक्त्रवान् ॥ ७० ॥
रसस्य जठरे ग्रासक्षेपणं चारणा मता ।
ग्रस्तस्य द्रावणं गर्भे गर्भद्रुतिरुदाहृता ॥ ७१ ॥
बहुवारं द्रुतिं कृत्य घनसत्त्वादिकं खलु ।
जारणाय रसेन्द्रस्य सा बाह्यद्रुतिरुच्यते ॥ ७२ ॥
निर्लेपत्वं द्रुतत्वं च तेजस्त्वं लघुता तथा ।
असंयोगश्च सूतेन पञ्चधा द्रुतिलक्षणम् ॥ ७३ ॥
औषधाध्मानयोगेन लोहधात्वादिकं तथा ।
संतिष्ठते द्रवाकारं सा द्रुतिः परिकीर्तिता ॥ ७४ ॥
द्रुतग्रासपरीणामो विडयन्त्रादियोगतः ।
जारणेत्युच्यते तस्याः प्रकाराः सन्ति कोटिशः ॥
क्षारैरम्लैश्च गन्धाद्यैर्मूत्रैश्च पटुभिस्तथा ।
रसग्रासस्य जीर्णार्थं तद्विडं परिकीर्तितम् ॥ ७६ ॥
सुसिद्धबीजधात्वादिजारणेन रसस्य हि ।
पीतादिरागजननं रञ्जनं परिकीर्तितम् ॥ ७७ ॥
सूते[14] सतैलयन्त्रस्थे स्वर्णादिक्षेपणं हि यत् ।
वेधाधिक्यकरं लोहे सारणा सा प्रकीर्तिता ॥ ७८ ॥
व्यवायिभेषजोपेतो द्रव्ये क्षिप्तो रसः खलु ।
वेध इत्युच्यते तज्ज्ञैः स चानेकविधः स्मृतः ॥ ७२ ॥
लेपः क्षेपश्च कुन्तश्च धूमाख्यः शब्दसंज्ञकः ।
लेपेन कुरुते लोहं स्वर्णं वा रजतं तथा ॥ ८० ॥
लेपवेधः स विज्ञेयः पुटमत्र च सौकरम् ।
क्षेपणं द्रुते लोहे वेधः स्यात्क्षेपसंज्ञितः ॥ ८१ ॥

---

१ ' । २ ग. समुखा । ३ ग °गचारि° । ४ घ °कान्सु । ५ ज मुद्रे निहि
१ ले यहिरेव । ८ क द्रुतीकृत्य । ९ ग लोहं धा° । १० घ द्रुत ग्रा° ।
११ णो वि° । १२ क ड ह. °रैम्लै° । १३ ग जारण । १४ घ °ते मुते° । १५
क °६ ग लेपन । १७ ज °मत्र ।

**अथ पुटानि**—रसादिद्रव्यपाकानां प्रमाणज्ञापनं पुटम् ।
नेष्टो न्यूनाधिकः पाकः सुपाकं हितमौषधम् ॥ ५० ॥
लोहादेरपुनर्भावो गुणाधिक्यं ततोऽग्रता ।
अनप्सुमज्जनं रेखापूर्णता पुटतो भवेत् ॥ ५१ ॥
पुटाद्ग्राव्णो लघुत्वं च शीघ्रव्याप्तिश्च दीपनम् ।
ज्वालितादपि सूतेन्द्राल्लोहानामधिको गुणः ॥ ५२ ॥
यथाऽऽत्मनि विशेषर्द्धिर्वहिस्थपुटयोगतः ।
चूर्णत्वाद्धि गुणावाप्तिस्तथा लोहेषु निश्चितम् ॥ ५३ ॥
निम्ने विस्तरतः कुण्डे द्विहस्ते चतुरस्रके ।
वनोत्पलसहस्रेण पूरिते पुटनौषधम् ॥ ५४ ॥
क्रौञ्च्यां रुद्धं प्रयत्नेन पिष्टिकोपरि निक्षिपेत् ।
वनोत्पलसहस्रार्धं क्रौञ्चिकोपरि विन्यसेत् ॥ ५५ ॥
वह्निं प्रज्वालयेत्तत्र महापुटमिदं स्मृतम् ।
राजहस्तप्रमाणेन चतुरस्रं च निम्नकम् ॥ ५६ ॥
पूर्णं चोपलैसंधीभिः कण्ठावध्यथ विन्यसेत् ।
विन्यसेत्कुमुदीं तत्र पुटनद्रव्यपूरिताम् ॥ ५७ ॥
पूर्णच्छगणतोऽर्धानि गिरिण्डानि विनिक्षिपेत् ।
एतद्गजपुटं प्रोक्तं महागुणविधायकम् ॥ ५८ ॥
इत्थं चारत्निके कुण्डे पुटं वाराहमुच्यते ॥ ५९ ॥
पुटं भूमितलं यत्तद्वितरितद्वितयोच्छ्रयम् ।
तावच्च तलविस्तीर्णं तत्स्यात्कुक्कुटकं पुटम् ॥ ६० ॥
यत्पुटं दीयते भूमावष्टसंख्यैर्वनोत्पलैः ।
बद्ध्वा सूतार्कभस्मार्थं कपोतपुटमुच्यते ॥ ६१ ॥
गोष्ठान्तर्गोखुरक्षुण्णं शुष्कं चूर्णितगोमयम् ।
गोवरं तत्समादिष्टं वरिष्ठं रसमार्धनम् ॥ ६२ ॥
गोवरैर्वा तुषैर्वाऽपि पुटं यत्र प्रदीयते ।
तद्गोवरपुटं प्रोक्तं रसभस्मप्रसिद्धये ॥ ६३ ॥

---

१ ट. °मने हैं° । २ ट. [illegible] । ३ ट. [illegible] । ४ ट. [illegible] । ५ प. [illegible] ट. [illegible] । ट. [illegible] । ६ प. [illegible] । ७ ट. [illegible] । ८ [illegible] । ९ ट. [illegible] । १० ज. [illegible] प. [illegible] । ११ ए. [illegible] । १२ प. [illegible] । १३ [illegible] । १४ ट. [illegible] । १५ प. [illegible] । १६ [illegible] । १७ प [illegible] । १८ प °धने ।

स्थूलभाण्डे तुषापूर्णे मध्ये मूषासमन्विते ।
वह्निना विहिते पाके तद्भाण्डपुटमुच्यते ॥ ६४ ॥
अधस्तादुपरिष्टाच्च कौञ्चिकाऽऽच्छाद्यते खलु ।
वालुकाभिः प्रतप्ताभिर्यत्र तद्वालुकापुटम् ॥ ६५ ॥
वह्निमित्रां क्षितौ सम्यङ्निखन्याद्द्व्यङ्गुलादधः ।
उपरिष्टात्पुटं यत्र पुटं तद्भूधराह्वयम् ॥ ६६ ॥
ऊर्ध्वं षोडशिकामात्रैस्तुषैर्वा गोर्वरैः पुटम् ।
यत्र तल्लावकाख्यं स्यात्सुमृदुद्रव्यसाधने ॥ ६७ ॥
अनुक्तपुटमाने तु साध्यद्रव्यबलाबलात् ।
पुटं विज्ञाय दातव्यमूहापोहविचक्षणैः ॥ ६८ ॥
पिष्टकं छगणं छाणमुत्पलं चोपलं तथा ।
गिरिण्डोपलसौठी च वराटी छगणाभिधाः ॥ ६९ ॥
सुवर्णं रजतं ताम्रं त्रपु सीसकमायसम् ।
षडेतानि च लोहानि कृत्रिमौ कांस्यपित्तलौ ॥ ७० ॥
लवणानि षडुच्यन्ते सामुद्रं सैन्धवं विडम् ।
सौवर्चलं रोमकं च चूलिकालवणं तथा ॥
क्षारत्रयं समाख्यातं यवसर्जिकटङ्कणम् ॥ ७१ ॥
पलाशमुष्ककक्षारौ यवक्षारः सुवर्चिका ।
तिलनालोद्भवः क्षारः संयुक्तं क्षारपञ्चकम् ॥ ७२ ॥
घृतं गुडो माक्षिकं च विज्ञेयं मधुरत्रयम् ।
कङ्गुणीतुम्बिनी घोषा करीरश्रीफलोद्भवम् ॥ ७३ ॥
कटुवार्ताकसिद्धार्थसोमराजीविभीतजम् ।
अतसीजं महाकालीनिम्बजं तिलजं तथा ॥ ७४ ॥
अपामार्गदेवदालीदन्तीतुम्बरुविग्रहात् ।
अङ्कोलोन्मत्तभल्लातपलाशेभ्यस्तथैव च ॥ ७५ ॥
एतेभ्यस्तैलमादाय रसकर्मणि योजयेत् ।
जम्बूकमण्डूकवसा वसा कच्छपसंभवा ॥ ७६ ॥

---

१ क. °मित्रान्क्षितौ°। ग °मित्रक्षि°। च. °मित्रा क्षि°। २ क °ष्रामूत्रै°। ३ क. गिरिटिन्द। ग. °सारी च। ५ च °भिधा। ६ क °यस्तात्रि°। ७ ट. करञ्जश्री°। ८ ख. षण्टत्रा°। ट. कदवा°। ख. °धेरोम°। १० ट. उत्तैरर°। ११ घ. तथा।

कर्कोटी शिशुमारी च गोसूकरनरोद्भवा ।
अजोष्ट्रखरमेषाणां महिषस्य वसा तथा ॥ ७७ ॥
मूत्राणि हस्तिकरभमहिषीखरवाजिनाम् ।
गोजावीनां स्त्रियः पुंसां पुष्पं बीजं तु योजयेत् ॥ ७८ ॥
माहिषाम्लु दधिक्षीरं साभिघारं शकृद्रसः ।
तत्पञ्चमाहिषं ज्ञेयं तद्वच्छागलपञ्चकम् ॥ ७९ ॥
अम्लवेतसजम्बीरनिम्बुकं बीजपूरकम् ।
चाङ्गेरीचणकाम्लं च अम्लिकं कोलदाडिमम् ॥ ८० ॥
अम्लिका तिन्तिणीकं च नारङ्गं रसपत्रिका ।
करवन्दं तथा चान्यदम्लवर्गः प्रकीर्तितः ॥ ८१ ॥
चणकाम्लश्च सर्वेषामेक एव प्रशस्यते ॥ ८२ ॥
अम्लवेतसमेकं वा सर्वेषामुत्तमोत्तमम् ।
रसादीनां विशुद्ध्यर्थं द्रावणे जारणे हितम् ॥ ८३ ॥
कोलदाडिमवृक्षाम्लचुल्लिकाचुक्रिकारसम् ।
पञ्चाम्लकं समुद्दिष्टं तथोक्तं चाम्लपञ्चकम् ॥ ८४ ॥
इष्टिका गैरिका लोणं भस्म वल्मीकमृत्तिका ।
रसप्रयोगकुशलैः कीर्तिताः पञ्चमृत्तिकाः ॥ ८५ ॥
शृङ्गीकं कालकूटं च वत्सनाभं सक्त्रियम् ।
पित्तं च विषवर्गोऽयं स वैरैः परिकीर्तितः ॥ ८६ ॥
रसकर्मणि शस्तोऽयं तद्भेदनविधावपि ।
अयुक्त्या सेवितश्चायं मारयत्येव निश्चितम् ॥ ८७ ॥
लाङ्गली विषमुष्टिश्च करवीरजयास्तथा ।
नीलिकः कनकोऽर्कश्च वर्गो ह्युपविषात्मकः ॥ ८८ ॥
हस्त्यश्ववनिता धेनुर्गर्दभी छागिकाऽविका ।
उष्ट्रिकोदुम्बराश्वत्थमानुन्यग्रोधतिल्वकम् ॥ ८९ ॥
दुग्धिका स्नुग्गणं चैतत्तथैवोत्तमकण्ठिका ।
एषां दुग्धैर्विनिर्दिष्टो दुग्धवर्गो रसादिषु ॥ ९० ॥

१ घ. कुक्टी । ङ. कर्कोटी शिशुमारी । २ ग. गोधाक° । क. गोमूक° । ३ घ. अश्वोष्ट्र° । ४ घ. तथा वसा। ५ ङ. °आविकाः स्त्रि° । ६ ङ. पुष्पदी° । ७ घ. °जं नियोजयेत् । ८ घ. अम्लीक । ङ. अम्लक । ९ ग. °ङ्गं सुरप° । ङ. °ङ्गं नीरप° । १० घ. करमर्दं । ११ क. °म्लचुल्लिका° । ङ. °म्लचक्रिकाचुक्रिका° । १२ घ. रसः । १३ ग. °भं च कृ° । ङ. °भं च मतुकम् । १४ ग. परः । ज. परः । १५ ङ. तद्बन्धन° । १६ क. °जरा त° । घ. °जरा त° । १७ ज. निम्बकः । ट. निस्त्रः । १८ घ. स्नुगुरवैव तथे° । १९ ग. °कर्णिका । ङ. °कन्दका ।

पारावतस्य चापस्य कपोतस्य कलापिनः ।
गृध्रस्य कुक्कुटस्यापि विनिर्दिष्टो हि विड्गणः ॥ ९१ ॥
शोधनं सर्वलोहानां पुटनाल्लेपनात्खलु ।
कुसुम्भं खदिरो लाक्षा मञ्जिष्ठा रक्तचन्दनम् ॥ ९२ ॥
अक्षी च बन्धुजीवश्च तथोकपूरगन्धिनी ।
माक्षिकं चेति विज्ञेयो रक्तवर्गोऽतिरञ्जनः ॥ ९३ ॥
किंशुकः कर्णिकारश्च हरिद्राद्वितयं तथा ।
पीतवर्गोऽयमादिष्टो रसराजस्य कर्मणि ॥ ९४ ॥
तगरः कुटजः कुन्दो गुञ्जा जीवन्तिका तथा ।
सिताम्भोरुहकन्दश्च श्वेतवर्ग उदाहृतः ॥ ९५ ॥
कदली कारवल्ली च त्रिफला नीलिका नलः ।
पङ्कः कासीसवाल्लाभ्रं कृष्णवर्ग उदाहृतः ॥ ९६ ॥
रक्तवर्गादिवर्गैश्च द्रव्यं तज्जारणात्मकम् ।
भावनीयं प्रयत्नेन तादृग्रागाप्तये खलु ॥
काचटङ्कणशिग्राभिः शोधनीयो गणो मतः ॥ ९७ ॥
सत्त्वानां बद्धसूतस्य लोहानां मलनाशनः ।
कापालीकङ्कुणध्वंसी रसवादिभिरुच्यते ॥ ९८ ॥
महिषीमेढ्राण्डगर्भकालिङ्गो धववीजयुक् ।
शशास्थिनी च वर्गोऽयं लोहकाठिन्यनाशनः ॥ ९९ ॥
गुडगुग्गुलुगुञ्जाज्यसारघैष्टङ्कणान्वितैः ।
दुर्द्रावाखिललोहादेर्द्रावणाय गणो मतः ॥ १०० ॥
क्षाराः सर्वे मलं हन्युरम्लं शोधनजारणम् ।
मान्द्यं विषाणि निघ्नन्ति स्नैग्ध्यं स्नेहाः प्रकुर्वते ॥ १०१ ॥

१ क. पारापतस्य । २घ. शोधन. । ३ क. °लेपना° । ४ घ. अक्षीतथ° । ङ. अक्षीत° । ५ क. °धाकपुर° । क. °धाकर्पूर° । ६ क. °अनम् । ७ ख. कुरनली । ङ. कूरवल्ली । ८ ख. नीलिनी । ९ ग. कपिराशसिवालाभ्र° । १० ङ. °व्य यत्ना° । ११ ग. °णालिसाभिः । ङ. °णशामाभि । १२ ङ. °नीयग° । १३ क. कपालिक गुणध्वसा । ख. कापिलिक गुणध्वसी । घ कापालीरगुणध्वमी । ङ. कापालिचगणध्वसी । १४ क. माहिषीमेढ्राण्डर्भशृङ्गो कलिङ्गो यववीजयुक् । ग. महिषीमेढ्राण्डयर्भकालिङ्गो धनवीजयुक् । महिषीमेढ्रगर्भश्च । घ. महिषी मेढ्रगर्भश्च कलिङ्गो यववीजयुक् । ङ. महिषीमेषशृङ्गोत्थकलिङ्गो धववीजक । १५ क. शशास्थि° ख शशास्थीनी । घ शशास्थीनि ङ शशास्थिनि च यगोऽय । १६ क. °गुग्गुलु° । १७ ग. °रमेष्ट° । घ. °रमैट° । १८ घ. दुर्द्रवा° । १९ ज. °नमार° । २० ख. मर्द्य ।

षट् तृत्र्यश्चैकलिक्षा तु षड्लिक्षा यूकमेव च ।
षड्यूकास्तु रजःसंज्ञं कथितं तव सुव्रते ॥ १०२ ॥
षड्जःसर्षपैः स स्यात्सिद्धार्थः स च कीर्तितः ॥ १०३ ॥
षट्सिद्धार्थैन देवेशि यवस्त्वेकः प्रकीर्तितः ।
षड्यवैरेकगुञ्जा तु त्रिगुञ्जो वल्ल उच्यते ॥ १०४ ॥
षड्भिरेव तु गुञ्जाभिर्माष एकः प्रकीर्तितः ।
माषा द्वादश तोलः स्यादष्टौ तोलाः पलं भवेत् ॥१०५॥११२०॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये मूषाकोष्ठिकापुटादिकथनं नाम दशमोऽध्यायः ॥ १० ॥

---

## अथैकादशोऽध्यायः ।

### [ अथ रसशोधनादिकथनम् । ]

त्रुटिः स्यादणुभिः षड्भिस्तैर्लिक्षा षड्भिरीरिता ।
ताभिः षड्भिर्भवेद्यूकः षड्यूकास्तद्रजः स्मृतम् ॥ १ ॥
षड्रजः सर्षपः प्रोक्तस्तैः षड्भिर्यव ईरितः ।
एका गुञ्जा यवैः षड्भिर्निष्पावस्तु द्विगुञ्जकः ॥ २ ॥
स्याद्गुञ्जात्रितयं वल्लो द्वौ वल्लौ माष उच्यते ।
द्वौ माषौ धरणं ते द्वे शाणनिष्ककलाः स्मृता ॥ ३ ॥
निष्कद्वयं तु वटकः स च कोल इतीरितः ।
स्यात्कोलत्रितयं तोलः कर्षो निष्कचतुष्टयम् ॥ ४ ॥
उदुम्बरं पाणितलं सुवर्णं कवलग्रहः ।
अक्षं बिडालपदकं शुक्तिः पाणितलद्वयम् ॥ ५ ॥
शुक्तिद्वयं पलं केचिदन्ये शुक्तित्रयं विदुः ।
तदेव कथितं मुष्टिः प्रकुञ्चो बिल्वमित्यपि ॥ ६ ॥
पलद्वयं तु प्रसृतं तद्द्वयं कुडवोऽञ्जलिः ।
कुडवौ मानिका तौ स्यात्प्रस्थो द्वे मानिके स्मृतः ॥ ७ ॥

---

१ घ. °त्स्यात्तद्°। २ च. °षः प्रकीर्तित°। ३ च. °रेव गुञ्जा च त्रि°। घ. °रेवगुञ्जा च त्रि°। ४ ज. °रेवास गु°। ५ छ. त्रुटिः। ६ च. °तूका षड्यूकास्त रजः। ७ च. °वाद्गुरजः। ८ घ. द्वे शाण°। ट. द्वे पाण निष्ककला स्मृता। ९ च. वटक। १० च. घ. °त्रुटित°। ११ च. प्रसृत। १२ ङ. °वौ द्वौ मानिकास्ता°। ट. °वौ मानिका च स्या°। १३ ञ. °स्तस्तु द्वे मानिके स्मृतम्।

प्रस्थद्वयं शुभं तौ द्वौ पात्रैकद्वयमाढकम् ।
तैश्चतुर्भिर्घटैर्मानं नल्वनर्मणशूर्पकाः ॥ ८ ॥
द्रोणस्य शब्दाः पर्यायाः पलानां शतकं तुला ।
चत्वारिंशत्पलशततुला भारः प्रकीर्तितः ॥ ९ ॥
रसार्णवादिशास्त्राणि निरीक्ष्य कथितं मया ।
रसोपयोगि यत्किंचिदिहशास्त्रे तत्प्रदर्शितम् ।
अधुना रसराजस्य संस्कारान्संप्रचक्ष्महे ॥ १० ॥
स्यात्स्वेदनं तदनु मर्दनमूर्छनं च
　स्यादुत्थितिः पतनरोधनियामनानि ।
संदीपनं गगनभक्षणमानमत्र
　संचारणा तदनु गर्भगता द्रुतिश्च ॥ ११ ॥
बाह्या द्रुतिः सूतकजारणा स्याद्ग्रासस्तथा सारणकर्म पश्चात् ।
संक्रामणं वेधविधिः शरीरे योगस्तथाऽष्टादशधाऽत्र कर्म ॥ १२ ॥
संयोज्यो मर्मणि च्छिन्ने न च क्षाराग्निदग्धयोः ।
शुद्धः सं मृद्वग्निसहो मूर्छितो व्याधिनाशनः ॥ १३ ॥
निष्कम्पवेगस्तीव्राग्नावायुरारोग्यदो मृतः ।
विषं वह्निर्मलश्चेति दोषा नैसर्गिकास्त्रयः ॥ १४ ॥
रसे मरणसंतापमूर्छानां हेतवः क्रमात् ॥ १५ ॥
यौगिकौ नागवङ्गौ द्वौ तौ जाड्याध्मानकुष्ठदौ ।
औपाधिकाः पुनश्चान्यैः कीर्तिताः सप्त कञ्चुकाः ॥ १६ ॥
भूमिजा गिरिजा वार्जा द्वे च द्वे नागवङ्गजे ।
द्वादशैते रसे दोषाः प्रोक्ता रसविशारदैः ॥ १७ ॥
"पर्पटी पोटनी भेदी द्रावी मलकरी तथा ।
अन्धकारी तथा ध्वाङ्क्षी विज्ञेयाः सप्त कञ्चुकाः" ॥ १८ ॥
भूमिजाः कुर्वते कुष्ठं गिरिजा जाड्यमेव च ।
वारिजा वातसंघातं दोषाढ्यं नागवङ्गयोः ॥ १९ ॥

---

"१ पर्पटाभा । २ विदारणी । ३ रन्ध्रकरी । ४ लोहादिद्रावकरी । ५ मलादिकरी । ६ कृष्णत्वकरी । ७ कालिमा ।"

---

१ अ °शुभोऽन्ये द्वौ पात्रक प्रस्थमा° । २ घ °मा द्व° । ३ °टोन्मानमल्वणार्मणकुम्भकाः । (सार्धयान्) ४ घ °णम श° । ५ च ट ठ °शत तु° । ६ ट °छने च । ७ अ °वापद्° । ८ अ. °रात्मो° । ९ ङ °श वर्म चात्र । १० ग स या° । घ न यो° । ११ ग °मग्निहोऽपि° । अ मद्वा- मि° । १२ ग मृतम् । १३ ख °मूर्छनाहे° । १४ ग °श्चान्ये का° । १५ च °मिजा कुरुते । अ °मिज कु° । १६ ग °गाय ना° ।

तस्मात्सूतविधानार्थं सहायैर्निपुणैर्युतः ।
सर्वोपस्कारमादाय रसकर्म समारभेत् ॥ २० ॥
द्वे सहस्रे पलानां तु सहस्रं शतमेव वा ।
अष्टाविंशत्पलान्येव दश पञ्चैकमेव वा ॥ २१ ॥
पलार्धेनैव कर्तव्यः संस्कारः सूतकस्य च ।
सुदिने शुभनक्षत्रे रसशोधनमाचरेत् ॥ २२ ॥

[ अथ संस्काराः ]

**अथ स्वेदनविधिः**—त्र्यूषणं लवणासूर्यौ चित्रकार्द्रकमूलम् ।
क्षिप्त्वा सूतो मुहुः स्वेद्यः काञ्जिकेन दिनत्रयम् ॥२३॥

**अथ मर्दनविधिः**—गृहधूमेष्टिकाचूर्णं तथा दधि गुडान्वितम् ।
लवणाम्लरिसंयुक्तं क्षिप्त्वा सूतं विमर्दयेत् ॥ २४ ॥
षोडशांशं तु तद्द्रव्यं सूतमानान्नियोजयेत् ।
सूतं क्षिप्त्वा समं तेन दिनानि त्रीणि मर्दयेत् ॥ २५ ॥
जीर्णाभ्रकं तथा बीजं जीर्णसूतं तथैव च ।
नैर्मल्यार्थं हि सूतस्य खल्वे धृत्वा तु मर्दयेत् ॥ २६ ॥
गृह्णाति निर्मलो रागान्ग्रासे ग्रासे विमर्दितः ।
मर्दनाख्यं हि यत्कर्म तत्सूतगुणकृद्भवेत् ॥ २७ ॥

**अथ मूर्छनविधिः**—गृहकन्या मलं हन्यात्त्रिफला वह्निनाशनी ।
चित्रमूलं विषं हन्ति तस्मादेभिः प्रयत्नतः ॥ २८ ॥
मिश्रितं सूतकं द्रव्यैः सप्तवाराणि मूर्छयेत् ।
इत्थं संमूर्छितः सूतो दोषशून्यः प्रजायते ॥ २९ ॥

**अथोद्धरणविधिः**—अस्माद्विरेकात्संशुद्धो रसः पात्यस्ततः परम् ।
उद्धृतः काञ्जिकक्वाथात्पूतिदोषनिवृत्तये ॥ ३० ॥

**अथ पातनविधिः**—ताम्रेण पिष्टिकां कृत्वा पातयेदूर्ध्वभाजने ।
वङ्गनागौ परित्यज्य शुद्धो भवति सूतकः ॥ ३१ ॥
शुल्वेन पातयेत्पिष्टिं त्रिधोर्ध्वं सप्तधा त्वधः ।
त्रिफलाशिग्रुशिखिभिर्लवणासुरिसंयुतः ॥ ३२ ॥
नष्टपिष्टिरसं कृत्वा लेपयेच्चोर्ध्वभाजनम् ।
ततो दीपैरध-पातमुत्पलैस्तत्र कारयेत् ॥ ३३ ॥

१ च. °मूर्छो चि° । २ ज. °त्कार्य° । ३ घ. °ओसयुत द्रव्य । ४ च सर्जिक्षी° । ५, ट. °मूत्रस्थै° । ६ ट. म । ७ ज. निखिलान्योमान्ग्रासो ग्रासे विमर्दयेत् । ८ घ ट. °त्या गंगा° । ९ घ विमर्दयेत् । १० म °स्त्र गु° । ११ च. °पिष्टि ए° । ट. °पिट्ट र° । १२ ड. °जने ।

हरिद्राङ्कोल्लशम्याककुमारीत्रिफलाभिभिः ।
तन्दुलीयकत्वपर्भूहिङ्गुसैन्धवमाक्षिकैः ॥ ३४ ॥
पिष्टं रसं सलवणैः सर्पाक्ष्यादिभिरेव वा ।
पातयेदथवा देवि व्रणग्रीयसलोचनैः ॥ ३५ ॥
इत्थं ह्यधोर्ध्वपातेन पातितोऽसौ यदा भवेत् ।
तदा रसायने योग्यो भवेद्रूपविशेषतः ॥ ३६ ॥
अथवा दीपकयन्त्रे निपातितः सर्वदोषनिर्मुक्तः ।
तिर्यक्पातनविधिना निपातितः सूतराजस्तु ॥ ३७ ॥
श्लक्ष्णीकृतमभ्रदलं रसेन्द्रयुक्तं तथाऽऽरनालेन ।
खल्वे दत्वा मृदितं यावत्तन्नष्टपिष्टतामेति ॥ ३८ ॥
कुर्यात्तिर्यक्पातनपातितसूतं क्रमेण दृढवह्निम् ।
संस्वेद्यः पात्योऽसौ न पतति यावद्दृढश्चाग्नौ ॥ ३९ ॥
तदाऽसौ शुध्यते सूतः कर्मकारी भवेद्ध्रुवम् ।
मर्दनैर्मूर्छनैः पातैर्मन्दः शान्तो भवेद्रसः ॥ ४० ॥

**अथ निरोधविधिः**—सैंधवाम्बुजैर्निरोधेन ततो मुखकरो रसः ।
स्वेदनादिवशात्सूतो वीर्यं प्राप्नोत्यनुत्तमम् ॥ ४१ ॥

**अथ नियामनविधिः**—नियम्योऽसौ ततः सम्यक्चपलत्वनिवृत्तये ।
कर्कोटीफणिनेत्राभ्यां वृश्चिकाम्बुजमार्कवैः ॥ ४२ ॥
समं कृत्वाऽऽरनालेन स्वेदयेच्च दिनत्रयम् ।
मरिचैर्भूखगयुक्तैर्लवणासुरिशिग्रुटङ्कणोपेतैः ॥
काञ्जिकयुक्तैस्त्रिदिनं ग्रासार्थी जायते स्वेदात् ॥ ४३ ॥

**अथ दीपनविधिः**—त्रिक्षारसिन्धुखगभूशिखिशिग्रुराजी-
तीक्ष्णाम्लवेतसमुखैर्लवणोषणाम्लैः ।
नेपालताम्रदलशोषितमारनाले
सांम्लासवाम्लपुटितं रसदीपनं तत् ॥ ४४ ॥
स्वेदयेदासवाम्लेन वीर्यतेजःप्रवृद्धये ।
पथोपयोगः स्वेद्यः स्यान्मूलिकानां रसेषु च ॥ ४५ ॥

---

१ ङ ह्रोकोल्ल°। २ क तण्डुली°। ३ घ च। ४ क देवी। ५ ग °ग्रीवक्ष°। ६ ख. पतितोऽ-सौ। ७ ज. °वन°। ८ ङ °सूत श°। ९ ङ °दमसौ। १० ग. °श्चाग्नौ। ११ ग. कामकारी। १२ ग. °दैनैः स्वेदनैः। १३ ख पृष्टपम्बु°। घ पङ्कपम्बु°। १४ ग तदा। १५ क. °वेसादिन°। ग. °वेसादि°। छ. °येतादिन°। १६ ज. °मूर्भृतु°। १७ ग ग्रासार्थी। १८ क द्विक्षा°। १९ ख. °नाल्सा°। ङ. °नाले सा°। २० ख [illegible] ग. [illegible] ङ [illegible] । २१ ग °योगः स्वे°।

सर्पाक्षी क्षीरिणी वन्ध्या मत्स्याक्षी शङ्खपुष्पिका ।
काकजङ्घा शिरिशिरा ब्रह्मदण्ड्याखुकर्णिका ॥ ४६ ॥
वर्षाभूकञ्चुकी दूर्वा सैर्यकोत्पलशिम्बिकाः ।
शतावरी वज्रलता वज्रकन्दाऽग्निकर्णिका ॥ ४७ ॥
श्वेतार्कशिग्रुधत्तूरभृङ्गदूर्वारसाङ्कुशाः ।
रम्भा रक्ता श्वनिर्गुण्डी लज्जालुः सुरदालिका ॥ ४८ ॥
गण्डूकपर्णी पाताली चित्रकं ग्रीष्मसुन्दरा ।
काकमाची महाराष्ट्री हरिद्रा तिलपर्णिका ॥ ४९ ॥
जाती जयन्ती श्रीदेवी भूकदम्बः कुसुम्भकः ।
कोशातकी नीरकणा लाङ्गली कटुतुम्बिका ॥ ५० ॥
चक्रमर्दोऽमृता कन्दः सर्पावर्तपुपुह्लिका ।
वाराही हस्तिशुण्डी च प्रायेण रसशृङ्खिकाः ॥ ५१ ॥
रसस्य भावने स्वेदे मूषालेपे च पूजिताः ।
इत्यष्टौ सूतसंस्काराः समा द्रव्ये रसायने ॥ ५२ ॥
कार्यास्ते प्रथमं शेषा नोक्ता द्रव्योपयोगिनः ॥ ५३ ॥

**अथ रसबन्धाः**—पञ्चविंशतिसंख्याकान्रसबन्धान्प्रचक्ष्महे ।
येन येन हि चाञ्चल्यं दुर्ग्रहत्वं च नश्यति ॥
रसराजस्य संप्रोक्तो बन्धनार्थो हि वार्तिकैः ॥ ५४ ॥
हठारोटौ तथाभासः क्रियाहीनश्च पिष्टिका ।
क्षारः खोटश्च पोटश्च कल्कबन्धश्च कज्जलिः ॥ ५५ ॥
सजीवश्चैव निर्जीवो निर्बीजश्च सबीजकः ।
शृङ्खला द्रुतिबन्धो च बालश्च कुमारकः ॥ ५६ ॥
तरुणश्च तथा वृद्धो मूर्तिबन्धस्तथाऽपरः ।
जलबन्धोऽग्निबन्धश्च सुसंस्कृतकृताभिधः ॥ ५७ ॥
महाबन्धाभिधानश्च पञ्चविंशतिरीरिताः ।
केचिद्वदन्ति पाङ्गिनो जलूकाबन्धसंज्ञकः ॥ ५८ ॥

---

[illegible footnotes]

स तावन्नेक्षते देही स्त्रीणां द्रावेऽतिशस्यते ।
हठो रसः स विज्ञेयः सम्यक्शुद्धिविवर्जितः ॥ ५९ ॥
स सेवितो नृणां कुर्यान्मृत्युं वा व्याधिमुद्धतम् ।
सुशोधितो रसः सम्यगारोट इति कथ्यते ॥ ६० ॥
स क्षेत्रकरणे श्रेष्ठः शनैर्व्याधिविनाशनः ।
पुटितोऽधो रसो याति योगं मुक्त्वा स्वभावताम् ॥ ६१ ॥
भावितो धातुमूल्याद्यैराभासो गुणवैकृते ।
असंशोधितलोहाद्यैः साधितो यो रसोत्तमः ॥
क्रियाहीनः स विज्ञेयो विक्रियां यात्यपथ्यतः ॥ ६२ ॥
तीव्रातपे गाढतरावमर्दात्पिष्टी भवेत्सा नवनीतरूपा ॥ ६३ ॥
सरसः पिष्टिकाबन्धो दीपनः पाचनस्तराम् ।
शङ्खशुक्तिवराटाद्यैर्योऽसौ संसाधितो रसः ॥ ६४ ॥
क्षारबन्धः परं दीप्तिपुष्टिकृच्छूलनाशनः ।
बन्धो यः खोटतां यातो ध्मातो ध्मातः क्षयं व्रजेत् ॥ ६५ ॥
खोटबद्धः स विज्ञेयः शीघ्रं सर्वगदापहः ।
द्रुतकज्जलिका मोचापत्रके चिपिटी कृता ॥ ६६ ॥
स पाटः पर्पटी सैवं बालाद्यखिलरोगनुत् ।
स्वेदाद्यैः साधितः सूतः पङ्कत्वं समुपागतः ॥ ६७ ॥
कल्कबद्धः स विज्ञेयो योगोक्तफलदायकः ॥ ६८ ॥
कज्जली रसगन्धोत्था सुश्लक्ष्णा कज्जलोपमा ।
तत्तद्योगेन संयुक्ता कज्जलीबन्ध उच्यते ॥ ६९ ॥
भस्मीकृतो गच्छति वह्नियोगाद्रसः सजीवैः स खलु प्रदिष्टः ।
संसेवितोऽसौ न करोति भस्मकार्यं जराव्याधिविनाशनं च ॥७०॥

---

१ घ. स तावन्नेष्यते देहे । ङ. सतावानेष्याने देहे । २ क. देहे । ३ क. मसे॰ । ४ ङ. क्षेत्री-करणे । च. क्षेत्रकरणश्रे॰ । ५ क. ॰तोऽयो र॰ । ख. ॰तोऽमो र॰ । घ. ॰तो यो र॰ । ६ ङ. रोगमुक्त्वा सनासनाम् । ७ ग. स्वभावतः । ८ क. भावि॰ । घ. माचितो । ङ. मायुनो । ९ क. ॰द्यैः स भा॰ । १० ख. ॰कृतः । ग. ॰कृतेः । ११ क. ॰बद्धो दी॰ । १२ ज. दीप्त- पु॰ । १३ क. पद्धो । १४ ङ. यानि । १५ घ. ॰बन्धः स॰ । १६ ङ. सर्वविषापहः । १७ घ. द्रुतकज्जलिका मोचापत्रके चिपिटा कृता । ङ. द्रुतकामलिका मोचापत्रके चिपिटी-कृता । घ. द्रुतः क॰ । घ. द्रुतकज्जलिको मोचापत्रके चिपिटा कृता । १८ च. मोचपत्रके चिपिटा कृता । १९ ङ. ॰व पद्धथाखि॰ । २० घ. ॰बन्ध स । २१ ज. ॰यो यथोक्त॰ । झ. ह्ययः पूर्वोक्त॰ । २२ ॰बद्ध उ॰ । २३ ज. नदगति । २४ ग. ॰ति गन्धगो॰ । २५ झ. ॰वः खलु समदिष्टः । २६ ङ. जराव्याधि॰ । २७ ग. ॰शनच ।

जीर्णाभ्रको वा परिजीर्णगन्धो भस्मीकृतश्चाखिललोहमौलिः ।
निर्जीवनामा हि स भस्मभूतो निःशेषरोगान्विनिहन्ति वेगात् ॥ ७१॥
रसस्तु पादांशसुवर्णजीर्णः पिष्टीकृतो गन्धकयोगतश्च ।
तुल्यांशगन्धैः पुटितः क्रमेण निर्बीजनामा सकलामयघ्नः ॥७२॥
पिष्टीकृतैरभ्रकसत्त्वहेमताराकंकान्तैः परिजारितो यः ।
हतस्त्वतः षड्गुणगन्धकेन स बीजबद्धो विपुलप्रभावः ॥ ७३ ॥
वज्रादिनिहतः सूतो हतः सूतः समोऽपरः ।
शृङ्खलाबद्धसूतेस्तु देहलोहविधायकः ॥
विश्वप्रभावां वेगेन व्याप्तिं जानाति शंकरः ॥ ७४ ॥
युक्तोऽपि चाम्लद्रुतिभिश्च सूतो बद्धगतो वा भसितस्वरूपः ।
स राजिकापादमितो निहन्ति दु साध्यरोगान्द्रुतिबद्धनामा ॥७५॥
समाभ्रजीर्णः शिवजस्तु बालः संसेवितो योगयुतो जवेन ।
रसायनो भाविगदापहश्च सोपद्रवारिष्टगदान्निहन्ति ॥ ७६ ॥
हरोद्भवो यो द्विगुणाभ्रजीर्णः स स्यात्कुमारो मिततन्दुलोऽसौ ।
निःसप्तरात्रैः खलु पाययोगसंघातघाती च रसायनं च ॥ ७७ ॥
चतुर्गुणव्योमकृताशनोऽसौ रसायनाग्र्यस्तरुणाभिधानः ।
स सप्तरात्रात्सकलामयघ्नो रसायनो वीर्यबलप्रदाता ॥ ७८ ॥
यस्याभ्रकः षड्गुणितो हि जीर्णः मात्राम्रिसेऽल्पः स हि वृद्धनामा।
देहे च लोहे च नियोजनीयः शिवादृते कोऽस्य गुणान्प्रवक्ति ॥७९॥
यो दिव्यमूलिकाभिश्च कृतोऽल्पग्निसहो रसः ।
विनाऽभ्रजारणात्स स्यान्मूर्तिबन्धो महारसः ॥ ८० ॥
अयं हि जार्यमाणस्तु सोऽग्निना क्षीयते रसः ।
योजितः सर्वयोगेषु निरुपम्यफलप्रदः ॥ ८१ ॥
शिलातोयमुखैस्तोयैर्बद्धोऽसौ जलबद्धवत् ।
स जरारोगमृत्युघ्नः कल्पोक्तफलदायकः ॥ ८२ ॥

---

१ ज °हमोह । २ ज °मपिम । ३ ट घ । ४ घ °म्मगा । ५ घ मद । ६ घ रसस्य । ७ घ पुन्ट । ८ च °नाम्ना म° । ९ ट °नीह° । घ °शह° । १० घ °त स्त । ११ °चौ (सर्धान्) । १२ ट °शिलिहि° । १३ ट मत म° । १४ ज °नपम् । १५ घ °तथ रे° । १६ क °धांस्नी । ग °धार्ति । ग °धनि । न °धांसना । १७ घ °मार बे° । ट °भावे° । ऋ. °मपा वोन । १८ घ [illegible] । न [illegible] । १९ घ [illegible] । • घ °दघ ना° । २१ ज [illegible] । २२ ट °भ्रम य° । २३ ट °षड्गुणना । २४ ट [illegible] । २५ घ °मिसक्ट । ग °मिमाद म° । २६ ट °कृता । २७ ट °हि [illegible] । २८ क [illegible] । २९ ट °वैतो° । ३० ट [illegible] । ३१ ट °देवान ।

केवलो लोहयुक्तो वा ध्मातः स्याद्गुटिकाकृतिः।
अक्षीणश्चाग्निबद्धोऽसौ खेचरत्वादिकृत्स हि ॥ ८३ ॥

हेम्ना वा रजतेन वा स हि परो ध्मातो व्रजत्येकता
मक्षीणो निचितो गुरुश्च गुटिकाकारोऽतिदीर्घोज्ज्वलः।
चूर्णत्वं पटुवत्प्रयाति निहतो घृष्टे न मुञ्चेन्मलं
निर्गन्धो द्रवति क्षणात्स हि मतो बद्धाभिधानो रसः ॥८४॥ [इति रसबद्धलक्षणम्।

विष्णुक्रान्ताशशिलताकुम्भीकनककूलिकैः।
विशालानागिनीकन्दव्याघ्रपादीकुतुम्बकैः ॥ ८५ ॥
वृश्चिकालीभशुण्डीभ्यां हंसपादीसहासुरैः।
अमसूतगवां मूत्रैः पिष्टं वा कुलके पचेत् ॥ ८६ ॥
पक्कमेवं मृतैर्लोहैर्मर्दितं विपचेद्रसम्।
यन्त्रेषु मूर्छा सूतानामेषकल्पः समासतः ॥ ८७ ॥

सूते गर्भनियोजितार्धकनके पादांशनागेऽथवा
पैश्चाङ्कुष्ठकशाल्मलीकृतमदाश्लेष्मातवीजैस्तथा।
तद्वत्तेजिनिकोलकाख्यफलजैश्चूर्णं तिलं पत्रकं
तप्ते खल्वतले निधाय मृदिते जाता जलूका वरा ॥ ८८ ॥
सैषा स्यात्कपिकच्छुरोमपटले चन्द्रावतीतैलके
चन्द्रे टङ्कणकामपिप्पलिजले स्विन्ना भवेत्तेजिनी।
तप्ते खल्वतले विमर्दनविधिर्यत्नाद्विलिं या कृता
सा स्त्रीणां मददर्पनाशनकरी ख्याता जलूका वरा ॥ ८९ ॥

बाल्ये चाष्टाङ्गुला योज्या यौवने च दशाङ्गुला।
द्वादशैव प्रगल्भानां जलौका त्रिविधा मता ॥ ९० ॥

---

१ ज. °बन्धोऽसौ। २ ज. °दिव-घकृत। ३ ज. °न रसंहि वरो। ४ ड. वा सिद्धि-
वरो। ५ ग. निश्चितो। घ. निबिडो। ६ घ. °श्च घुटि°। ७ ड. °दीप्तोज्ज्वलः। ८ घ. निहितो। ९ घ.
घृटो। १० क. मुञ्चन्मल। ११ घ निर्वन्धो। १२ ड. महाबद्धाभिधानोऽपरः। १३ घ. °कूलकैः।
१४ ड. °या महामुनैः। १५ घ. °हाशुभैः। क. °हामुनैः। ज. °हासुरैः। १६ ग. °मूत्रे। १७ ड
पित्ते। पिष्ट। १८ ग. वालुकके। घ वालुकैः। ड. वा कुकुटे। १९ ख. पश्चाङ्कस्य च शा°। ज
पश्चाङ्कोत्थित शा°। ड. पश्चाङ्गेषु च शा°। २० ड. °मदः श्ले°। क. °मदश्ले। २१ ट. °तेजनि कोकिलाक्ष°
२२ क. °नि नैलकाक्ष°। घ. °निकेलिकाख्य°। ज. °नि कोकिलाख्य°। २३ ड. मृदित। ज
मृदिता। २४ ड. जटौका। २५ ग. °तेजनी। २६ ज. दीप्ते। २७ ज. मर्यं विधिवद्यत्नान्मुक्ता य
२८ ट. °विधिर्नाद्रटी या। २९ घ. °त्नाद्वटि या। ३० क. पा। ३१ ट. जलौका। ३२ ज
पा। ३३ क.जलूका। ३४ क. वरा।

धृत्वा स्थूलमुखे पात्रं मेषीक्षीरं प्रदापयेत् ।
स्थापयेदातपे तीव्रे वासराण्येकविंशतिः ॥ ९१ ॥
द्वितीयाऽत्र मया प्रोक्ता जलौका द्रावणे हिता ।
पुरुषाणां स्थिता मूर्ध्नि द्रावयेद्वीजमद्भुतम् ॥ ९२ ॥
मुनिपत्ररसश्चैव शाल्मलीवृन्तवारि च ।
जातीमूलस्य तोयं च शिंशपातोयसंयुतम् ॥ ९३ ॥
श्लेष्मातकफलं चैव त्रिफलाचूर्णमेव च ।
कोकिलाक्षस्य चूर्णं च पारदं मर्दयेद्बुधः ॥ ९४ ॥
जलूका जायते दिव्या रामाजनमनोहरा ।
सा योज्या कामकाले तु कामयेत्कामिनी स्वयम् ॥ ९५ ॥
त्रिफलाभृङ्गमहौषधमधुसर्पिश्छागदुग्धगोमूत्रे ।
नागं सप्तनिषिक्तं रससमंजरितं जलूका स्यात् ॥ ९६ ॥
भानुस्वरदिनसंख्याप्रमाणसूतं गृहीतदीनारम् ।
अङ्कोलराजवृक्षकुमारीरसशोधनं कुर्यात् ॥ ९७ ॥
शशिरेखावरवर्णीसकोकिलाक्षापामार्गकनकानाम् ।
चूर्णैः सहैकविंशतिदिनानि संमर्दयेत्सम्यक् ॥ ९८ ॥
निशायाः काञ्जिकं धूपं दत्त्वा योनौ प्रवेशयेत् ।
बालमध्यमवृद्धास्तु योज्या विज्ञाय तत्क्रमात् ॥ ९९ ॥
नीरसानामपि नृणां योषा स्यात्सङ्गमोत्सुका ।
रसभागचतुष्कं तु वङ्गभागं तु पञ्चमम् ॥ १०० ॥
सैरसारससंयुक्तं टङ्कणेन समन्वितम् ॥ १०१ ॥
त्रिदिनं मर्दयित्वा च गोलकं च रसोद्भवम् ॥
लिङ्गाग्रे योनिनिक्षिप्तं यावदायुर्वशंकरम् ॥ १०२ ॥

१ ख. सूक्ष्ममुखे । ङ. सूतमुखे पात्रे मेष्याः क्षी°। २ख. पात्रे मेष्याः क्षी°। ३ च. स्थाप°। ४ क. °येद्वाऽऽत्र°। ५ घ वाराणमेक°। ६ घ. °येद्वनितातुल । ङ. °येद्वीर्यमुद्धतम् । ७ ज. °स्मला श्च°। ८ ङ. °रिणा । ९ घ. वा । १० ज. आतिम्° । ११ क शिंशपा°। १२ क. °ला-स्यस्य । १३ ज. °मरञ्जित । ग. °मजारि°। ङ. °मजनित । १४ च. °सूतग्°। ट. सूत दीनान्तरम् । सूत दीनार । १५ क. °तदान्तारम् । १६ क. °र्णीस°। घ. °र्णी स° ङ. °रचूर्णैकोकिलाक्षापमा°। १७ क. °लाक्षापा°। १८ ट. °क्षापमा°। १९ ज. निर्वीर्या° । २० ङ. काञ्जिके । २१ ज. योनि । २२ क. °वृद्धासु यो°। क. °वृद्धासु योज्यो वि°। २३ ख. °यनात्क°। २४ घ. निर°। २५ घ. निर्गुण्डीरम° । निर्गुंडीरस । २६ ज. तु ।

कर्पूरसूरणसुभृङ्गसुमेघनादै-
मांगं निपिच्य तु मिथो वलयेद्रसेन ।
लिङ्गस्थितेन वलयेन नितम्बिनीनां
स्वामी भवत्यनुदिनं स तु जीवहेतुः ॥ १०३ ॥
टङ्कणपिप्पलिकामासूरणकर्पूरमातुलुङ्गरसैः ।
कृत्वो स्वाङ्गुलिलेपं योनिं विद्रावयेत्स्त्रीणाम् ॥ १०४ ॥
अग्न्यावर्तितनागे हरवीजं निक्षिपेत्ततो द्विगुणम् ।
मुनिकनकनागसर्पदन्त्याऽथ सिच्याच्च तन्मध्यम् ॥ १०५ ॥
तेक्रेण मर्दयित्वा गणतो मदनवलयं कृत्वा ।
रतिसमये वनितानां रतिगर्वविनाशनं कुरुते ॥ १०६ ॥
व्याघ्रीवृहतीफलरससूरणकन्दं च चणकपत्राम्लम् ।
कपिकच्छुवज्रवल्लीपिप्पलिकामाम्लिकाचूर्णे ॥ १०७ ॥
अग्न्यावर्तितनागं नववारं मर्दयेद्भिमैर्द्रव्यैः ।
स्मरवलयं कृत्वैतद्वनितानां द्रावणं कुरुते ॥ १०८ ॥
पलाशवीजैरक्तं च जम्वीराम्लेन सूतकम् ।
संजीवं मर्दितं यन्त्रे पातितं म्रियते ध्रुवम् ॥ १०९ ॥
खरमञ्जरिवीजान्वितपुष्करवीजैः सुचूर्णितैः कल्कम् ।
कृत्वा सूतं पुटयेद्दृढमूषायां भवेद्भस्म ॥ ११० ॥
काकोदुम्बरिकाया दुग्धेन सुभावितो हिङ्गुः ।
मर्दनपुटेन विधिना सूतं भस्मीकरोत्येव ॥ १११ ॥
[20]देवदालीं हरिक्रान्तामारनालेन [21]पेषयेत् ।
तैद्रवैः सप्तधा सूतं कुर्यान्मर्दितमूर्छितम् ॥ ११२ ॥
तत्सूतं खर्परे दद्याद्दत्वा दत्वा तु तद्द्रवम् ।
चुल्ल्योपरि पचेच्चाहं भस्म स्याल्लवणोपमम् ॥ ११३ ॥

---

१ च. °हसमे°। २ ज. महो । ३ क. वलय रसेन। ४ ग. °कामीसू°। ट. °कामिर°। ५ क. °त्वाऽऽ°
सर्वेदन्त्यार्थ मि°। घ. °मर्प-
१ च. °हसमे°। २ ज. महो । ३ क. वलय रसेन। ७ ड. °सर्वे दत्वाऽय । क. °सर्पदन्त्यार्थ मि°। घ. °मर्प-
दमाहु°। ट. °त्वाऽऽमावर्तिते°। ६ ट. °गुणे । ७ ड. °सर्व दत्वाऽय । क. ... १० ज. गणेन । ११ घ. °कामाम्लिकाचू-
दन्त्याऽय। ८ घ. ड. °न्मध्ये । ९ क. नितेन । घ. तास्रेन । १० ज. गणेन । १४ च. कृत्वेन°। १५ च. °वीज
र्णेण् । १२ ज. °वसार मानमर्दिमेर्द्रव्यै. । १३ ड. छादयेदिनद्रव्यैः । १४ च. कृत्वेन°। १५ च. °वीज
र°। १६ क. °जक रक्तज° । १७ ज. °राम्ल च सूतके । १८ ड. °जीवम°। १९ ड. पाचित । २०च.
पुट दृढ°। २१ ज. दृढमुताया । २२ ट. °पुटनविधानात्म° । २३ क. देवदाली। २४ घ. भावयेत् ।
२५ घ. तद्द्रव्यै । २६ ड. चुल्योप°। २७ घ. °पचेदा भ° । ट. °चेद्यान्ह भ°। ञ. °चेद्यान्द्वा भ°।

अपामार्गस्य बीजानि तथैरण्डस्य चूर्णयेत् ।
तच्चूर्णं पारदे देयं मूषायामधरोत्तरम् ॥ ११४ ॥
रुद्ध्वा लघुपुटैः पच्याच्चतुर्भिर्भस्मतां नयेत् ।
कटुतुम्ब्युद्भवे कन्दे गर्भे नारीपयःप्लुते ॥ ११५ ॥
सप्तधा म्रियते सूतः स्वेदितो गोमयाग्निना ।
अङ्कोल्लस्य शिफावारिपिष्टं खल्वे विमर्दयेत् ॥ ११६ ॥
सूतं गन्धकसंतुल्यं दिनान्ते तं निरोधयेत् ।
पुटयेद्भूधरे यन्त्रे दिनान्ते स मृतो भवेत् ॥ ११७ ॥
वटक्षीरेण सूतांशो मर्दयेत्प्रहरत्रयम् ।
पाचयेत्तेन काष्ठेन भस्मीभवति तद्रसः ॥ ११८ ॥
अथाऽऽतुरो रसाचार्यं साक्षाद्देवं महेश्वरम् ।
साधितं च रसं शृङ्गदन्तवेण्वादिधारितम् ॥ ११९ ॥
अर्चयित्वा यथाशक्ति देवगोब्राह्मणानपि ।
पर्णखण्डे ध्रुवं सूतं जग्ध्वा स्यादनुपानतः ॥ १२० ॥
घृतसैन्धवधान्याकजीरकार्द्रकसंस्कृतम् ।
तन्दुलीयकधान्याकपटोलाम्लकुमादिकम् ॥ १२१ ॥
गोधूमजीर्णशाल्यन्नं गव्यं क्षीरं घृतं दधि ।
हंसोदकं मुद्गरसः पथ्यवर्गः समासतः ॥ १२२ ॥
बृहतीबिल्वकूष्माण्ड वेत्राग्रं कारवेल्लकम् ।
माषं मसूरं निष्पावं कुलित्थं सर्षपं तिलम् ॥ १२३ ॥
लङ्घनोद्वर्तनस्नानताम्बूलसुरासवान् ।
आनूपमांसं धान्याम्लं भोजनं कदलीदले ॥
कांस्ये च गुरु विष्टम्भि तीक्ष्णोष्णं च भृशं त्यजेत् ॥ १२४ ॥
कर्कारीफलमाम्लिकं च कमठं तैलं तथा राजिका
निम्बूकं कतकं करिञ्जकफलं कूष्माण्डकं चर्मटी ।
धात्रीलिकुचकारवेल्लकफलं कर्कोटिकायाः फलं
वृन्ताकं च कपित्थकं खलु गणः प्रोक्तः ककारादिकः ॥१२५॥

---

१ च. आमला । २ क. ग. पुटै । ३ च. पचन । ४ अ. मतम् । ५ क. [illegible] । [illegible]

देवीशास्त्रोदितः सोऽयं ककारादिगणो मतः ।
शास्त्रान्तरविनिर्दिष्टः कथ्यतेऽन्यप्रकारतः ॥ १२६ ॥
केङ्गुः कन्दुककोलकुक्कुटकलङ्कोडाः कुलत्थास्तथा
कण्टारी कटुतैलकृष्णगलकः कूर्मः कलायः कणी ।
कर्कारुं च कटिल्लकं च कतकं कर्कोटकं कर्कटी
कैकाली काञ्जिकमेषकादिकगणः श्रीकृष्णदेवोदितः ॥१२७॥
यस्मिन्रसे च कण्ठोक्त्या ककारादिर्निषेधितः ।
तत्र तत्र निषेध्यस्तु तदौचित्यमतोऽन्यतः ॥ १२८ ॥
उद्गारे सति दध्यन्नं कृष्णमीनं सजीरकम् ।
अभ्यङ्गमनिलक्षोभे तैलैर्नारायणादिभिः ॥ १२९ ॥
अरतौ शीततोयेन मस्तकोपरि सेचनम् ।
तृष्णायां नारिकेलाम्बु मुद्गयूषं सशर्करम् ॥ १३० ॥
द्राक्षादाडिमखर्जूरकदलीनां फलं भजेत् ।
रसवीर्यविवृद्ध्यर्थं दधिक्षीरेक्षुशर्कराः ॥ १३१ ॥
शीतोपचारमन्यच्च रसत्यागविधौ पुनः ।
भक्षयेद्बृहतीविल्वं सकृत्साधारणो विधिः ॥ १३२ ॥ १२६२॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये रसशोधनबन्धनभस्मजलूकादिनिरूपणं नामैकादशोऽध्यायः ॥११॥

---

## अथ द्वादशोऽध्यायः ।

## [ अथ ज्वरचिकित्सनम् । ]

ज्वरस्य रक्तपित्तस्य कासस्य श्वासहिध्मयोः ।
वैस्वर्यस्य क्षयस्यापि तथाऽरोचप्रसेकयोः ॥ १ ॥
छर्दिहृद्रोगयोश्चैव तृष्णामयोद्भवार्शसाम् ।
उदावर्तातिसाराणां ग्रहण्यर्तिप्रवाहिणोः ॥ २ ॥
त्रिपून्या वह्निमान्द्यस्य मूत्रकृच्छ्राश्मरीरुजाम् ।
मेहस्य सोमरोगस्य [17]पिटकानां च विद्रधेः ॥ ३ ॥

---

१ क. °न्तरे वि°। २ ग. कङ्गू। ३ ज. °कुटग°। ४ ड. °टाप. प°। ५ ख. कणी। छ. कणा। ६ अ. कर्कोर। कर्कारुश्च (साधीयान्)। ७ ड. मीरी। च. वीली। ८ ग च. °दिति°। ९ ग. निषेध्य तत्तदौचित्यतोऽन्यत। १० ज. कृष्टमत्र। ज. कृष्णामी°। ११ ड. षेचनम्। १२ अ. मुद्ग यू°। १३ अ. °यस्य वृ°। १४ ट. °दधी वि°। १५ अ. °दिवयो.। १६ ट. °हण्यार्ति°। १७ क. पिटिका°।

वृद्धिगुल्मादिरोगाणां शूलानामुदरस्य च ।
पाण्डुशोफविसर्पाणां कुष्ठचित्रनभस्वताम् ॥ ४ ॥
वातास्रस्याऽऽवृतानां च वन्ध्यानां गर्भिणीरुजाम् ।
सूतिकाबालरोगाणामुन्मादेऽपस्मृतावपि ॥ ५ ॥
नेत्ररोगे कर्णरोगे नासारोगास्यरोगयोः ।
शिरःसंजातरोगेषु व्रणे भङ्गे भगन्दरे ॥ ६ ॥
ग्रन्थ्यादौ क्षुद्ररोगेषु गुह्यरोगे विषेषु च ।
जरापास्त्वनपत्यानां बीजपोषणहेतवे ॥ ७ ॥
परिपाट्याऽनया सर्वं रोगाणां हि चिकित्सितम् ।
रसलोहविषैरत्र योगैर्वक्ष्ये यथागमम् ॥ ८ ॥
रोमाञ्चकम्पौ वदने मधुरत्वमुज्जृम्भणं मरसपक्तोददाहौ ।
वातज्वरस्योक्तमिदं हि लक्ष्म भुक्तोत्तरः स्याद्यदि शब्ददेव ॥९॥
विरेकशोषास्यकटुत्वतीव्रतापप्रलापभ्रममूर्छनानि ।
एतानि पित्तज्वरलक्षणानि वमिः सतृष्णाङ्गविदाहिता च ॥१०॥
कासश्वासौ मुखे जाड्यं माधुर्यं बहुनिद्रता ।
प्रस्वेदः स्वल्पदाहश्च श्लेष्मजज्वरलक्षणम् ॥ ११ ॥
मिश्रितं लक्षणं यत्तु द्वयोस्त्रिषु भवेच्च तत् ॥ १२ ॥

[ अथ रसायनान्याह ।

अथ *त्रैलोक्यसुन्दररसः—विमर्दिताभ्यां रसगन्धकाभ्यां
नीरेण कुर्यादिह गोलकं तम् ।
भाण्डे नवीने विनिवेश्य पश्चा-
त्तद्गोलकस्योपरि ताम्रपात्रम् ॥ १३ ॥
सार्धं मुहूर्तं विनिरुध्य धीमानुदीरयेद्दीप्तकृशानुनाऽस्य ।
अधस्ततः सिध्यति पर्पटीयं नवज्वरारण्यकृशानुवेगः ॥ १४ ॥
विलिप्य पूर्वं रसनां च तालुदेशं च सिन्धूत्थरजोऽम्लयार्द्रैः ।
वल्लोन्मितां चार्द्रकतोयमिश्रामेनां निपीय स्वपेत्पटेन ॥१५॥
घर्मोद्गमो यावदनन्तरं च तक्रौदनं पथ्यमिह प्रयोज्यम् ।
कुर्याद्दिनानां त्रितयं यदीत्थं ज्वरस्य नष्टोऽस्ति तदा भयं न ॥१६॥

* [illegible]

१ [illegible] २ [illegible] ३ [illegible] ४ [illegible] ५ [illegible]
[illegible]

**अथ त्रैलोक्यडम्बररसः***—सूतार्कगन्धचपलाजयपालतिक्ता-
पथ्यात्रिवृच्च विषतिन्दुकजान्समांशान् ।
संभाव्य वज्रिपयसा मधुना त्रिवल्ल-
स्त्रैलोक्यडम्बररसोऽभिनवज्वरघ्नः ॥ १७ ॥

**अथ मेघनादरसः**—पादांशकंसाररविःसमांश-
गन्धो विषर्कैः स्वकषायपिष्टः ।
रसः क्रमान्माषमितश्चलादि-
ज्वरेषु नाम्ना किल मेघनादः ॥ १८ ॥

**अथ †ज्वरगजहरिरसः**—दरदजलदयुक्तं शुद्धसूतं च गन्धं
महरमथसुपिष्टं वल्लयुग्मं च दद्यात् ।
ज्वरगजहरिसंज्ञं शृङ्गवेरोदकेन
प्रथमजनितदाहीक्षीरभक्तेन भोज्यः ॥ १९ ॥

**अथ ‡दीपिकारसः**—संतप्तसीसभागं च पारदं गन्धकं कणाम् ।
समभागं पृथक्तत्र मेलयेच्च यथाविधि ॥ २० ॥
जम्बीरस्य रसे सर्वं मर्दयेच्च दिनत्रयम् ।
मेघनादकुमार्योश्च रसे चापि दिनत्रयम् ॥ २१ ॥
दिनद्वयमजामूत्रे गवां मूत्रे दिनत्रयम् ।
भावयेच्च यथायोग्य तस्मिन्नेतानि दापयेत् ॥ २२ ॥
सैन्धवं चित्रकं भागं सौवर्चलवणं तथा ।
तेन संमेलनं कृत्वा भावयेच्च पुनः क्रमात् ॥
अनेन विधिना सम्यक्सिद्धो भवति तद्रसः ॥ २३ ॥
शर्कराघृतसंयुक्तं दद्याद्वल्लत्रयं रसम् ।
गोधूमस्यौदनं पथ्यं माषसूपं च वास्तुकम् ॥ २४ ॥
धात्रीफलसमायुक्तं सर्वज्वरविनाशनम् ।
दीपिकारस इत्येषे तन्त्रज्ञैः परिकीर्तितः ॥ २५ ॥

**अथ शीतभञ्जी रसः**—पारद रसकं तालं तुत्थं गन्धकटङ्कणम् ।
सर्वमेतत्समं शुद्धं कारवल्ल्या द्रवैर्दिनम् ॥ २६ ॥

* ड. °रस । नवज्वरे । † क ज्वरगजकेसरी । ‡ रसगजसिंह । ‡ ड. सर्वज्वरे ।

१ ख °तिलप° । २ ड °मांशम् । ३ ड वज्रप° । ४ ट. °क सक° । ५ च रसत्र° । ६ ड सुगन्ध
७ ट °दाहे क्षी° । ८ ट भोज्य । ९ ड. °भागे च ° । १० क. कणा । ११ च. °विधि १२ ड. रसै. ।
१३ ख °नद्वय° । १४ अ. पन । १५ ड. °यस्तज्ञैः । १६ क °ङ्कणी ।

21833

BHARATIYA V... 21833 S N... LIBRARY

**अथ *बृहज्ज्वराङ्कुशः**—रसहिङ्गुलजेपालैर्बुद्ध्या दन्त्यम्बुमर्दितैः ।
दिनार्धेन ज्वरं हन्याद्गुञ्जैकं सितया सह ॥ ३८ ॥

**अथ महाज्वराङ्कुशः**—शुद्धं सूतं विषं गन्धं धूर्तबीजं त्रिभिः समम् ।
चतुर्भिश्च समं व्योषं चूर्णीकृत्य निधापयेत् ॥ ३९ ॥
दन्तभाण्डेऽथवा शार्ङ्गे काष्ठे नैव कदाचन ।
वातश्लेष्मज्वरे देयं द्वन्द्वजे वा त्रिदोषजे ॥ ४० ॥
रसेन शृङ्गवेरस्य जम्बीरस्याथवा पुनः ।
गुञ्जाद्वयं च जीर्णेऽस्मिन्दधिभक्तं प्रयोजयेत् ॥ ४१ ॥
एकद्वित्रिदिनैर्हन्याज्ज्वरान्दोषक्रमेण तु ।
महाज्वराङ्कुशो नाम रसोऽयं शंभुनोदितः ॥ ४२ ॥

**अथ मृत्युंजयः**—तालं ताम्ररजो रसश्च गगनं गन्धश्च नेपालकं
दीनारप्रमितं तदर्धमुदितं टङ्कं शिला माक्षिकम् ।
दीनारद्वितयं विषस्य शिखिनः पिष्ट्वा रसैः पाचितो
पश्चिन्तामणिवज्ज्वरौघविजयी नाम्ना तु मृत्युंजयः ॥४३॥

**अथ †सर्वज्वरारिः**—तालं ताम्रमयोरजश्च चपलातुल्याभ्रकं कान्तकं
नागं स्याच्च समांशकं सुमुदितं मूलं च पौनर्नवम् ।
भृङ्गीकासहरीपुनर्नवमहामन्दारपत्रोद्भवैः
कल्कं वालुकयन्त्रपाचितमिदं सर्वज्वरस्यान्तकृत् ॥ ४४ ॥

**अथ ‡चन्द्रसूर्यो नाम रसः**—तुल्येन तुल्यः शिवजेश्च गन्धो
जम्बीरनीरेण विमर्दनीयः ।
दिनत्रयं मेलय तेन तुल्यं
व्योषं ततः सिध्यति चन्द्रसूर्यः ॥ ४५ ॥
वेल्लो विजेतुं विषमावलम्बि दलेन देयो भुजगाख्यवल्ल्याः ।
दुग्धं हितं स्यादिह शृङ्गवेररसेन शैत्येषु स सेवनीयः ॥ ४६ ॥
तक्रं सगर्भाज्वरशूलयोस्तु द्राक्षाम्बुना पथ्यमनन्तरोक्तम् ।
रोधवरापाः सलिलेन शूलं जम्बीरनीरेण वराजलेन ॥ ४७ ॥

---

* ङ. हिङ्गुलेश्वरः । † ङ. सर्वज्वरान्तक. । ‡ घ. चन्द्रसूर्योदरो नाम रसः ।

१ क. रसहिङ्गुलनेपा° । घ. रसहिङ्गुलनेपा° । ट. रसो हिङ्गुलनेपालैर्द्धा दन्त्याम्बु° । ज. रसगन्धकनेपा° । २ ङ. द्गुञ्जैका सि° । ज. °द्गुञ्जका सि° । ३ च. शुद्धम् । ४ क. जेपालक । ५ घ. टङ्कः । ६ ङ. °ग माक्षम° । ७ च शार्ङ्गी । ८ ङ. °हारेदार° । ९ ट °जस्य ग° । १० घ. पत्रै । ज. वर्णं । ११ घ. °स्यां द° । ट. °स्मिन्य द° । १२ घ शैत्येषु स सेवनीय । १३ ट. °से ऽपसे° ।

मर्दयेत्तेन कल्केन ताम्रपात्रोदरं लिपेत् ।
अङ्गुलार्धार्धमानेन तं पचेत्सिकताह्वये ॥ २७ ॥
यन्त्रे यावत्स्फुटन्त्येवं व्रीहयस्तस्य पृष्ठतः ।
ततः सुशीतलं ग्राह्यं ताम्रपात्रोदराद्भिषक् ॥ २८ ॥
शीतभञ्जी रसो नाम चूर्णयेन्मरिचैः समम् ।
माषैकं पर्णखण्डेन भक्षयेन्नाशयेज्ज्वरम् ॥ २९ ॥
त्रिदिनैर्विषमं तीव्रमेकद्वित्रिचतुर्थकम् ॥ ३० ॥

अथ मृतजीवनरसः—कूष्माण्डचूर्णतिलजैः प्रविशुद्धतालं
गाढं विमर्द्य सुपवीसलिलेन तुल्यम् ।
सूतेन हिङ्गुलभुवा सिकताख्ययन्त्रे
गोलं विधाय परिवृत्तकपालमध्ये ॥ ३१ ॥
पात्रेण तं दिनपतेरपिधाय रुद्ध्वा
संधिं तपोर्गुडसुधालटिकाशिवाभिः ।
वह्नौ पचेन्मृदुनि चात्रशिरस्थशालि-
वैवर्ण्यमात्रमवधिं प्रविधाय धीमान् ॥ ३२ ॥
वल्लं ततः सुरसमिश्रममुष्य दद्या-
त्सर्पिःसिताकणपयो मधु चानुपेयम् ।
जेतुं ज्वरान्सविषमानिह वान्तिशान्त्यै

विस्तारे परिणाहे च गर्तां कृत्वा षडङ्गुलाम् ।
फणिवल्लीदलान्यन्तर्गर्तायां प्रक्षिपेन्नरः ॥ ६१ ॥
पर्णेषु सूतकल्कं तं गर्तायां स्थापयेदृढम् ।
कल्कादुपरि तत्पर्णैर्गर्तावक्त्रं प्रपूरयेत् ॥ ६२ ॥
गर्तायां तु ततो देयं पुटमारण्यकोत्पलैः ।
स्वाङ्गशीतलतां ज्ञात्वा समाकर्षेत्ततःपरम् ॥ ६३ ॥
सूतलिप्तदलैः सार्धं कल्कं खल्वे विमर्दयेत् ।
तोलार्धममृतं क्षिप्त्वा तोलार्धं तिन्तिंरीफलम् ॥ ६४ ॥
स्थापयेत्खल्वितं कल्कं योजयेद्गुञ्जमात्रया ।
शृङ्गवेराम्भसा युक्तं तीक्ष्णचित्रकसैन्धवैः ॥ ६५ ॥
संनिपाते तथा वाते त्रिदोषे विषमज्वरे ।
अग्निमान्द्ये ग्रहण्यां च तथा देयोऽतिसारिणि ॥ ६६ ॥
भोजनं दधिभक्तं च रसेऽस्मिन्संप्रयोजयेत् ।
व्याध्यादिकं यथा कुर्यादुदकं ढालयेत्ततः ॥ ६७ ॥
एष योगवरः श्रीमान्प्राणिनां प्राणदायकः ।
चिन्तामणिरिति ख्यातो रसः सर्वाङ्गसुन्दरः ॥ ६८ ॥

**अथ लोकनाथगुटिका**—सूतेन्द्रं परिमर्द्य पञ्चपटुभिः क्षारैस्त्रिभिस्तं ततः
पिण्डे हिङ्गुमहौषधासुरिमये सस्वेद्य धान्योदके ।
निर्गुण्ड्यम्बुहुताशमन्थतिलपर्ण्युन्मत्तभृङ्गार्द्रकं
कामातागिरिकर्णिकाप्लुवदलापञ्चाङ्गुलोत्थैर्जलैः ॥ ६९ ॥
सूतेन्द्रेण समैर्विमर्द्य सहजैः पित्तैस्ततो भावये-
दंष्ट्रिच्छागलुलायमत्स्यशिखिनां सा संनिपाताञ्जयेत् ।
विख्याता भुवि लोकनाथगुटिका मारीचमात्रा हिता
स्यादस्याः संहितं दधीक्षुशकलं वीर्यं भवेच्छीतलैः ॥ ७० ॥

**अथ सूचिकाभरणो रसः**—वज्रवैक्रान्तयोर्भस्म प्रत्येकं निष्कसंमितम् ।
शृङ्गीविषं द्विनिष्कं च त्रिनिष्कं चूलिकापटु ॥ ७१ ॥

---

१ घ ठ. °रान्यन्त ग° । २ग ङ °पेदध° । ३ क °सिडीफ° । ४ ग °रिणे ।५ज व्याध्याधिक यदा कुर्यादुदक दालयेत्तत । ग व्याध्याधिक्य । म. व्याध्याधिक । ढ. व्याधाधिक्य यदा कु° । झ. ताप॰ धिक्य तथा । ६ क. °गुलिका । ७ ग °धाम्लक° । ञ °काम्लकदनाताभा° । ट. °साग्नक° । ८ ङ °येद्गुच्छा° । ९ ङ° °गुल्मिका । १० ञ. ममित । ११ ङ. °क्षुमक° । १२ ट. °मतुलम् !

अपस्मृतावत्र नियोजनीयमभ्यञ्जनं निम्बपयोभवाभ्याम् ।
घृतौदनं स्यादिह भोजनाय जम्बीरनीरेण निहन्ति गुल्मम्॥४८॥
हिङ्ग्वम्लिकानिम्बुरसेन [1]देयं प्लीहोदरे स्यादिह तक्रभक्तः।
स्तम्भार्थमस्मिन्ससितं पयः स्याद्गुडो नियोज्यो वमनप्रशान्त्यै॥४९
अशीतिर्यस्य वर्षाणि वसुवर्षाणि यस्य वा ।
विषं तस्य न दातव्यं दत्तं चेद्दोषदायकम् ॥५०॥ इति क्षेपकः।

अथ उमाप्रसादनो *रसः—मेघपारदवैगन्धविषव्योपपट्टनि च ।
जीरकद्वयमेतानि समभागानि कारयेत् ॥ ५१ ॥
सिन्दुवाररसेनापि लशुनस्य रसेन च ।
अपामार्गरसेनापि सप्तरात्रं विमर्दयेत् ॥ ५२ ॥
तत्पक्कं वालुकायन्त्रे गुञ्जामात्रं प्रयोजयेत् ।
सनागवल्लीमरिचं ततः शीताम्बु पाययेत् ॥ ५३ ॥
उमाप्रसादनो नाम रसः शीतज्वरापहः ।
चातुर्थिकं त्रिरात्रं वा नाशयेत्किमुतापरान् ॥ ५४ ॥

अथ †ज्वराङ्कुशरसः—टङ्कणं रसगन्धौ च समभागान्प्रकल्पयेत् ।
नेपालं द्विगुणं दत्त्वा मर्दयेत्खल्वमध्यतः ॥ ५५ ॥
श्लक्ष्णतां याति तद्यावत्तावत्तन्मर्दयेच्छनैः ।
सैन्धवं मरिचं शङ्खं चिञ्चाक्षारं समाक्षिकम् ॥ ५६ ॥
तुल्यमेतत्त्रयं कृत्वा निम्बुतोयेन मर्दयेत् ।
चणप्रमाणवटकान्भक्षयेच्च दिनत्रयम् ॥ ५७ ॥
ऐकाहिकं द्व्याहिकं च त्र्याहिकं च चतुर्थकम् ।
सर्वज्वरविनाशाय ज्वराङ्कुश इति स्मृतः ॥ ५८ ॥

## अथ सर्वाङ्गसुन्दरचिन्तामणिरसः ।

अभ्रकं गन्धकं सूतं [1]तोलैकैकं पृथक्पृथक् ।
गृहीत्वा विषतोलार्धं तोलार्धं तित्तिरीफलम् ॥ ५९ ॥
एतत्सर्वं समं कृत्वा मर्दयेत्खल्वमध्यतः ।
श्लक्ष्णतां याति तद्यावत्तावत्संमर्दयेच्छनैः ॥ ६० ॥

---

* ड. रसः शीतज्वरे । † ड. ज्वराङ्कुशः सर्वज्वरे ।

---

१ अ. देह । २ घ. °स्मिन्सवित । ३ अ. °षनारक° । ४ ट. रसोनस्य । ५ क. सप्तवार । ६ ड. प्रदापयेत् । ७ अ. °मात्रक° । ८ अ. खण्ड । ९ क. तुरीम° । १० ग. °लैकं च पृ° । ११ ड. तितिरि° । क. °तिरी फ° । ख.° । घ. °त्तिरीफ° ।

विस्तारे परिणाहे च गर्तां कृत्वा षडङ्गुलाम् ।
फणिवल्लीदलान्यन्तर्गर्तायां प्रक्षिपेन्नरः ॥ ६१ ॥
पर्णेषु सूतकल्कं तं गर्तायां स्थापयेद्दृढम् ।
कल्कादुपरि तत्पर्णैर्गर्तावक्त्रं प्रपूरयेत् ॥ ६२ ॥
गर्तायां तु ततो देयं पुटमारण्यकोत्पलैः ।
स्वाङ्गशीतलतां ज्ञात्वा समाकर्षेत्ततःपरम् ॥ ६३ ॥
सूतलिप्तदलैः सार्धं कल्कं खल्वे विमर्दयेत् ।
तोलार्धममृतं क्षिप्त्वा तोलार्धं तिन्तिरीफलम् ॥ ६४ ॥
स्थापयेत्खल्वितं कल्कं योजयेद्गुञ्जमात्रया ।
शृङ्गवेराम्भसा युक्तं तीक्ष्णचित्रकसैन्धवैः ॥ ६५ ॥
संनिपाते तथा वाते त्रिदोषे विषमज्वरे ।
अग्निमान्द्ये ग्रहण्यां च तथा देयोऽतिसारिणि ॥ ६६ ॥
भोजनं दधिभक्तं च रसेऽस्मिन्संप्रयोजयेत् ।
व्याध्यादिकं यथा कुर्यादुदकं क्षालयेत्ततः ॥ ६७ ॥
एष योगवरः श्रीमान्प्राणिनां प्राणदायकः ।
चिन्तामणिरिति ख्यातो रसः सर्वाङ्गसुन्दरः ॥ ६८ ॥

**अथ लोकनाथगुटिका**—सूतेन्द्रं परिमर्द्य पञ्चपटुभिः क्षारैस्त्रिभिस्तं ततः
पिण्डे हिङ्गुमहौषधामरिमये संस्वेद्य धान्योदके ।
निर्गुण्ड्यम्बुहुताशमन्थतिलपर्ण्युन्मत्तभृङ्गार्द्रकं
कामातागिरिकर्णिकाप्लवदलापञ्चाङ्गुलोत्थैर्जलैः ॥ ६९ ॥
सूतेन्द्रेण समैर्विमर्द्य सहजैः पित्तैस्ततो भावये-
द्दंष्ट्रिच्छागलुलायमत्स्यशिखिनां सा संनिपाताञ्जयेत् ।
विख्याता भुवि लोकनाथगुटिका मारीचमात्रा हिता
स्यादस्याः सहितं दधीक्षुशकलं वीर्यं भवेच्छीतलैः ॥ ७० ॥

**अथ सूचिकाभरणो रसः**—वज्रवैकान्तयोर्भस्म प्रत्येकं निष्कसंमितम् ।
शृङ्गीविषं द्विनिष्कं च त्रिनिष्कं चूलिकापटु ॥ ७१ ॥

---

१ घ ठ °रान्यत्र ग°। २ग ङ °पेद्धः। ३ क. °तिर्वाफ°। ४ ग °रिणे। ५ग व्याध्यादिक यदा कुर्यादुदकं क्षालयेत्ततः। ग व्याध्याधिक्य। ग. व्याध्याधिकं। ड. व्याधाधिक्य यदा कु°। ञ. ताप्राधिक्य तथा। ६ क. °गुलिका। ७ ग °कामरकद°। ञ °कामरदनागबला°। ट. °रागार्द्र°। ८ ड. °येद्दष्टा°। ९ ट° °गुटिका। १० ङ मरित। ११ ङ °अमक°। १२ ङ °[illegible]।

पञ्चनिष्कोऽग्निजारश्च सर्वमेकत्र मेलयेत् ।
तावद्भस्मरसं यावन्मर्दयेद्दिवसत्रयम् ॥ ७२ ॥
शार्ङ्गेष्टादिकवर्गस्य क्षारनीरेण भावयेत् ।
त्रयोविंशतिवाराणि विमर्द्य च विशोष्य च ॥ ७३ ॥
ततो विमर्द्य दिवसं क्षिपेद्दन्तकरण्डके ।
मृतसंजीवनाख्योऽयं सूचिकाभरणो रसः ॥ ७४ ॥
संनिपातेन तीव्रेण मुमूर्षोर्भूगतस्य च ।
तालुनि प्रच्छयित्वाऽथ रसमेनं विनिक्षिपेत् ॥ ७५ ॥
सूच्याऽतिसूक्ष्मया तोयाभिन्नयाऽतिप्रयत्नतः ।
ततस्तैलेन तं लिप्त्वा निवाते संनिवेशयेत् ॥ ७६ ॥
ततोऽर्धप्रहरादूर्ध्वं मुक्तमूत्रपुरीषकम् ।
लब्धसंज्ञं प्रतापाढ्यं दोलयन्तं शिरो मुहुः ॥ ७७ ॥
आयुष्मन्तं विजानीयादन्यथा चान्यथा खलु ।
ततः शीताम्बुसंपूर्णे कटाहे तं निवेशयेत् ॥ ७८ ॥
तत्र चोत्क्वथितं तोयमपनीयापरं क्षिपेत् ।
याचमानममुं पश्चात्पाययेत्ससितं पयः ॥ ७९ ॥
दधि वा सितयोपेतं नारिकेलजलं तथा ।
रम्भाफलानि दद्याच्च म्रियते सोऽन्यथा खलु ॥ ८० ॥
लब्धसंज्ञं प्रभाषन्तं याचमानं फलादिकम् ।
तस्मादाकृष्य तैलाक्तं तैलं [११]पिष्ट्वाऽपनीय च ॥ ८१ ॥
लेपयेद्गन्धकर्पूरैरापादतलमस्तकम् ।
इत्यादिशिशिरैर्द्रव्यैः सप्तरात्रमुपाचरेत् ॥ ८२ ॥
कर्णाक्षिनासिकावक्त्रे क्षिपेत्पोताश्रयं मुहुः ।
अष्टमेऽहनि संप्राप्ते दर्दुरीमूलजं रसम् ॥ ८३ ॥
ससितं पाययेद्वेगमवतारयितुं रसम् ।
रसेऽवतारिते पश्चाद्यथेष्टं भोजनं दधि ॥ ८४ ॥
श्वासोच्छ्वासयुतं चान्यैर्मुक्तजीवनलक्षणैः ।
कटाहे जलसंपूर्णे निक्षिपेद्बोधलब्धये ॥ ८५ ॥

---

१ क. °निष्काऽग्नि°। २ ग. शार्ङ्गेष्टा°। ३ ग. च ठ. ड. मृतसंजीवनाऽथ ४ क. तोयाभि°। ख. तोय भि°। ५ ड. प्रच्छाद्य च। ६ ङ. चोत्क्वथिते। ज. चेत्क्वथित। ७ क. नारिकेलज°। ८ क. प्रभाषन्त। ९ क. °मन्त°। १० ग. °पिष्ट्याऽप°। ११ ग. °गन्धकर्पूर°। १२ क. °सर्वैः। ङ. °सर्वैः। १३ क. °शिरश्चैव। १४ ग. °मे च तानि°। १५ ग. भजेत्। ट. ददेत्।

लब्धबोधं तमाकृष्य पूर्ववत्समुपाचरेत् ।
जीवित्वा यावदायुष्यं म्रियते तदनन्तरम् ॥ ८६ ॥
संनिपाते महाघोरे मज्जन्तं मृत्युसागरे ।
उद्धरेत्तस्य धर्मस्य ब्रह्माऽप्यन्तं न विन्दति ॥ ८७ ॥
संनिपातमहामृत्युभयनिर्मुक्तमानवः ।
अपि सर्वस्वदानेन प्राणाचार्यं प्रपूजयेत् ॥ ८८ ॥
अन्यथा नरके[1] तावद्यावत्कल्पविकल्पना[2] ।
इत्याज्ञा शांकरी ज्ञेया शंभुना[3] परिकीर्तिता ॥ ८९ ॥
प्रकाशा[4] नैव कर्तव्या रसोत्तरणमूलिका[5] ।
शास्त्रं विना प्रयच्छन्ते[6] मन्दा वित्ताभिकाङ्क्षया ॥ ९० ॥
गुरुप्रसादमासाद्य संनिपाते प्रयुज्यताम् ।
शार्ङ्गेष्टा च तथा व्याघ्री करीरस्तिलपर्णिका ॥ ९१ ॥
इन्द्रवारुणिका मुस्ता हरिद्राऽङ्कोलमूलिका ।
अपामार्गः कणा स्वर्णं[7] कटुतुम्बी च [8]तिन्तिणी ॥
शार्ङ्गेष्टादिकवर्गोऽयं संनिपातहरः परम् ॥ ९२ ॥

अथ *सूचीमुखो रसः—सूतं गन्धकतालकं मणिशिलां[9] ताप्यं लवं तुत्थकं
जेपालं विषटङ्कणं मधुफलं कृत्वा समांशं दृढम् ।
कृत्वा कज्जलिकां विषोल्बणफणेः पित्तैश्च संभावये-
त्क्षिप्त्वा सीसककूपिके रसवरं सूचीमुखं[10] नामतः ॥ ९३ ॥
ब्रह्मद्वारविकीर्णलोहिततलवे[11] गुञ्जैकमात्रं ददे-
द्दत्वा संपुटबद्धतन्द्रिकधनुर्वाते सशाखाहिमे[12] ।
कासं श्वासमरोचकं प्रलपनं कम्पं च हिक्कातुरं
मूकत्वं बधिरत्वमुन्मदमपस्मारं जयेत्तत्क्षणात् ॥ ९४ ॥

अथ संनिपातगजाङ्कुशः—रसगन्धकताम्राभ्रं लाङ्गलीवह्निरामठम् ।
वन्ध्यापटोलनिर्गुण्डीसुगन्धानिम्बपल्लवाः ॥ ९५ ॥
पाठाक्षारत्रयंक्ष्वेलबोलधत्तूरतन्दुलैः ।
शृङ्गीमधुकसारं च जम्बीराम्लेन मर्दयेत् ॥ ९६ ॥

---

* ट. संनिपाते सूचीमुखरसः ।

---

१ ट. °के याति यावत्क° । २ ञ. °विभावना । ३ घ नन्दिना । ४ च प्रकाशो । ५ ञ. °सो-धार° । ६ घ ठ. प्रयुज्यन्ते । घ. प्रयुञ्जन्ते । ट. प्रयोज्यन्ते । ७ ट. स्वर्णः । ८ ट. तिंतिणी । ९ ञ. फ. ठ. ड. मणिशिला । मनःशिला । १० ड. °मुखो ना° । ११ क. °तलने गु° । घ. °तले गु° । १२ ञ. °स्नेहके° ।

कुर्याद्धि निष्कमानेन वटिकां सा नियच्छति ।
सस्वेददाहाभिन्यासससंनिपातगजाङ्कुशः ॥ ९७ ॥

अथ चातुर्थिकहरो रसः—*ससारा †वैष्णवीसेना ‡अचला §कादिकं ¶कणा ।
*रागरुद्रोपमोपेता ‡पौढा मस्तकशालिनी ॥ ९८ ॥
त्रिभागं तालकं [1]विन्द्यादेकभागं तु पारदम् ।
तदर्धं गन्धकं चैव तदर्धं तु मनःशिला ॥ ९९ ॥
कारवल्लीदलरसैर्मर्दयेत्प्रहरत्रयम् ।
पाचितो वालुकायन्त्रे चातुर्थिकनिवारणः ॥ १०० ॥

अथ चातुर्थिकगजाङ्कुशः—स्याद्रसेन समायुक्तो गन्धकः सुमनोहरः ।
हिपावैल्लित्रिगुणितो निर्गुण्डीरसमर्दितः ॥ १०१ ॥
सप्तवाराणि तच्चोज्यमार्द्रकस्वरसेन तु ।
संततादिज्वरं हन्याच्चातुर्थिकगजाङ्कुशः ॥ १०२ ॥

अथ मृत्युंजयरसः—ताप्यतालकनेपालवत्सनाभमनःशिलाः ।
ताम्रगन्धकसूतं च मुसलीरसमर्दितः ॥ १०३ ॥
मृत्युंजय इति ख्यातः कुक्कुटीपुटपाचितः ॥ १०४ ॥
वल्लद्वयं प्रयुञ्जीत यथेष्टं दधिभोजनम् ।
नवज्वरं संनिपातं हन्यादेष महारसः ॥ १०५ ॥

अथ पञ्चवक्त्ररसः—शुद्धं सूतं विषं गन्धं मरिचं टङ्कणं कणाम् ।
मर्दयेद्धूर्तजद्रावैर्दिनमेकं तु शोषयेत् ॥ १०६ ॥
पञ्चवक्त्रो रसो नाम द्विगुञ्जः संनिपातजित् ।
अर्कमूलकषायं च सत्र्यूषमनुपाययेत् ॥ १०७ ॥
दध्योदनं हितं तत्र जलयोगं च कारयेत् ।
रसगन्धकतुल्यांशं धत्तूरफलजैर्द्रवैः ॥ १०८ ॥

अथ उन्मत्तरसः—मर्दयेद्दिनमेकं तु तत्तुल्यं त्रिकटु क्षिपेत् ।
उन्मत्ताख्यो रसो नाम्ना नस्ये स्यात्संनिपातजित् ॥ १०९ ॥

---

* ससारा पारदोपेता । † विष्णवीसेना हरितालं । ‡ अचला मनःशिला । § कादिकं गन्धकम् । ¶ कणा पिप्पली । * रागरुद्रोपमा ताम्रम् । † रुद्रोपमाभिर्द्वादशभिः । ‡ पौढा मस्तकशालिनी । शालिम्पुटनमात्र इत्यर्थः ।

---

१ घ. °र्यावद्धिनिष्का° । २ घ. °का मति । ३ ट. मर्नोय दा° । ४ ट. °न्याम स° । ५ घ. दिवाई° । ६ ख. °कहरो रसः । ७ घ. °वल्लिरि° । ८ ग. घ. °कजेश° । ९ ट. °टंगमरा° । १० घ. शुद्धम् । ११ ख. घ. वण्ण ।

**अथ संनिपाताञ्जनरसः**—निस्त्वग्जेपालजं बीजं दशनिष्कं प्रचूर्णयेत् ।
मरिचं पिप्पलीसूतं प्रतिनिष्कं विमिश्रयेत् ॥ ११० ॥
भाव्यं जम्बीरजैर्द्रावैः सप्ताहं तत्प्रयत्नतः ।
संनिपातं निहन्त्याशु अञ्जने यः शिवः स्मृतः ॥ १११ ॥
मदनफलं विडलवणं सर्षपाः प्रतिनिष्कद्वयम् ।
चूर्णयित्वा त्रिफलाकाथेन सटङ्कणं पिबेत् ॥ ११२ ॥
कुष्ठज्वरकामलाजीर्णकण्ठरोगनुत् ।
नस्ये च गिरिकर्ण्युत्थबीजैकं शीतवारिणा ॥ ११३ ॥

**अथ प्रतापलङ्केश्वरः**—प्रत्येकं रसगन्धयोर्द्विपलयोः कृत्वा मषीं शुद्धयो-
रस्यां म्लेच्छलुलायलोचनमनोधात्रीप्रकुञ्जत्रयम् ।
पथ्याया बदरत्रिकं त्रिकटु पट्टपाणं वचाधर्मिणी
वेल्लाम्भोधरपत्रकद्विरदकिञ्जल्काश्वगन्धाह्वयम् ॥११४॥
पिष्टैस्तत्समधूकसारमखिलं कर्षोन्मितं न्यस्यत-
स्तोन्मर्चार्धकरञ्जकामृतयुतं सागस्तिकन्यूषणैः ।
भूधात्रीविजयासरित्पतिफलं ज्वालामुखीमार्कवैः
प्रत्येकं विदधीत निश्चलमतिः सप्त क्रमाद्भावनाः ॥ ११५ ॥
पित्तैरथो पञ्चविधाय पञ्चभिः करञ्जमात्रामृतधूपनं ततः ।
दत्वाऽऽर्द्रकस्य स्वरसेन तन्दुलाकृतिं विदध्याद्गुटिकां भिषग्वरः ॥११६॥
देयैका संनिपाते प्रतिहतविषये मोहनेत्रप्रसुप्त्योः
स्याद्गुल्मे साजमोदा पवनविकृतिषु त्र्यूषणेन ग्रहण्याम् ।
दाल्व्या जीरकेण द्विपतुरगनृणां प्राणसंरक्षणाय
कारुण्याम्भोधिरेतद्रसकसमरसं वैद्यनाथोऽभ्यधत्त ॥ ११७ ॥

**अथ प्राणेश्वरः**—*गन्धकाभ्रसमः सूतो वाराहीरसमर्दितः ।*
पाचितो वालुकायन्त्रे त्रिफलाव्योषचित्रकैः ॥ ११८ ॥
त्रिक्षारं पञ्चलवणं हिङ्गुगुग्गुलुदीप्यकैः ।
सजीरकैः सेन्द्रयवैः पृथग्रससमैर्युतः ॥ ११९ ॥
माषमात्रोऽनुपानेन द्विपलस्योष्णवारिणः ।
अभिन्यासानलभ्रंशग्रहणीपाण्डुगुल्मिनाम् ॥ १२० ॥

---

१ क, ठ. चैतनाञ्जनो रस° । ट. शिवनामा रसः । २ ख. °स्त्वङ्नेपा° । ३ ञ. मरीचपि° । ४ ट. °अनोऽयं शि° । ५ ख. °न मासमेक तनः पि° । ६ ड. वैद्यनाथरसः । ७ घ. °ट् शाण । ८ च. °त्रक द्वि° । ९ च. °स्तिक त्र्यू° । १० ज. °थोऽभिधायी । ११ ड. °भ्यदत्त । १२ ख. °लुदिप्य° । १३ ट. °मात्रा- तु° । च. °मात्रानुमाने° । १४ क. °रिणा ।

कुर्यात्प्राणपरित्राणमतः प्राणेश्वरः स्मृतः ।
व्याधिशब्दो भयोगोऽस्य द्वौ वारौ वैद्यसंमतः ॥ १२१ ॥

अथ मृतसंजीवनः—रसार्पोव्योपकङ्कुष्ठशिलातालाभ्रहिङ्गुलान् ।
कुम्भ्यग्निभृङ्गमारीपतन्दुलीयकमाक्षिकान् ॥ १२२ ॥
हस्तिशुण्डीयुतांस्तुल्यांस्तदर्धंशिवगन्धकान् ।
त्र्यहमार्द्राम्बुना पिष्ट्वा कूपिस्थं वालुकाग्निना ॥ १२३ ॥
जयाजम्बीरनिर्गुण्डीचाङ्गेरीवारिनिक्षिपेत् ।
पक्त्वा चतुर्दशाहानि पिष्ट्वा द्राक्तं विशोषयेत् ॥ १२४ ॥
मृतसंजीवनाख्योऽयं रसो वल्लमितोऽशितः ।
प्रागजयेदौषधं संनिपातादीन्सकलान्गदान् ॥ १२५ ॥

अथ मृतसंजीवनः—रसभागो भवेदेको गन्धको द्विगुणो मतः ।
विषताल्कककङ्कुष्ठशिलाहिङ्गुललोहकम् ॥ १२६ ॥
वह्निस्त्रिकटुभृङ्गाह्वहेममाक्षिकमभ्रकम् ।
हस्तिशुण्डी विषं कुम्भी तन्दुलीयकताम्रकौ ॥ १२७ ॥
एषां प्रत्येकमेकैकं भागमादाय चूर्णयेत् ।
आर्द्रकस्य द्रवेणैव मर्दयेच्च दिनत्रयम् ॥ १२८ ॥
जम्बीरस्य रसो ग्राह्यः पलत्रयपरीक्षितः ।
त्रिफलायाश्च निर्गुण्ड्याः प्रत्येकं च पलत्रयम् ॥ १२९ ॥
रसस्य पलमात्रं तु चाङ्गेर्याः परिकीर्तितम् ।
काचकूप्यां विनिक्षिप्य यन्त्रे क्षिप्त्वा प्रयत्नवान् ॥ १३० ॥
उद्धृत्याऽऽर्द्रकनिर्यासैर्मर्दयित्वा विशोषयेत् ।
मृतसंजीवनो नाम रसोऽयं विदितो भुवि ॥
गुञ्जाद्वयं ददीतास्य संनिपातापनुत्तये ॥ १३१ ॥

अथ संनिपातकुठारः—वङ्गं नागं च सूतं च नेपालं गन्धकं तथा ।
शुल्वं विषं समांशेन रसेनाऽऽर्द्रेण मर्दयेत् ॥ १३२ ॥
पुनर्मर्द्येत निर्गुण्डीचाङ्गर्या रसमर्दितः ॥
एकवल्लप्रयोगेण रसोऽयं संनिपातनुत् ॥ १३३ ॥

अथ नवज्वरारिः—गन्धकं च रसं शुद्धं प्रत्येकं कर्षसंमितम् ।
" ... कुर्यात् गोलकम् ॥ १३४ ॥

"१ ४ क. 'प्राप्नोति'।

१ क. [illegible]

नवभाण्डे विनिक्षिप्य ताम्रपात्रेण गोपयेत् ।
दृढं निरुध्य तत्पात्रमग्नावारोपयेत्ततः ॥ १३५ ॥
व्रीहिस्फुटनमात्रेण स्वाङ्गशीतं समुद्धरेत् ।
नवज्वरे प्रयुञ्जीत रसं पर्पटिकाह्वयम् ॥ १३६ ॥
आर्द्रकस्य रसेनैव त्रिवल्लं त्रिदिनं भिषक् ।
ज्वरितं छादयेद्गाढं यावत्स्वेदः समुद्भवेत् ॥ १३७ ॥
तक्रभक्तं भवेत्पथ्यं ज्वरमुक्तस्य देहिनः ॥ १३८ ॥
नवज्वरारिरित्येष रसः परमदुर्लभः ।
वातज्वरे विशेषेण रसः साधारणोऽप्ययम् ॥ १३९ ॥

**अथ जलमञ्जरीरसः**—टङ्कणं रसगन्धौ च मरिचानि समांशकम् ।
सर्वं जम्बीरनीरेण दिनानि त्रीणि मर्दयेत् ॥ १४० ॥
संशोष्य शर्करायुक्तं मत्स्यपित्तेन भावयेत् ।
भावितं तद्रसं सिद्धमार्द्रकस्वरसैस्त्र्यहम् ॥ १४१ ॥
वेल्लत्रयं प्रयुञ्जीत पानार्थं वारि शीतलम् ।
तक्रभक्तं भवेत्पथ्यं वृन्ताकफलसंयुतम् ॥
सर्वान्नवज्वरान्हन्ति रसोऽयं जलमञ्जरी ॥ १४२ ॥
[ पित्तज्वरे ज्वरारिरप्यनुभूतः ।

**अथ कान्तरसः**—कान्तलोहस्य पत्राणि कण्टवेध्यानि कारयेत् ।
ततः संपेष्य तं कल्कं मर्दयेत्रिदिनं पुनः ॥ १४३ ॥
रसतुल्येन मत्स्यस्य पित्तेन परिभावयेत् ॥ १४४ ॥
सिद्धः कान्तरसो ह्येष प्रयोज्योऽभिनवज्वरे ।
शृङ्गवेरानुपानेन मात्रया भिषगुत्तमैः ॥ १४५ ॥

**अथ चन्द्रोदयः**—रसगन्धौ तथा वङ्गमभ्रकं समभागतः ।
मेलयित्वाऽथ वङ्गेन समं सूतं विमर्दयेत् ॥ १४६ ॥
तत्रैकीकृत्य गन्धाभ्रे पेष्य जम्बीरवारिणा ।
सामान्यं पुटमादद्यात्सप्तधा साधितं रसम् ॥ १४७ ॥
कुमार्या चित्रकेणापि भावयित्वाऽथ सप्तधा ।
गुडेन जीरकेणापि ज्वरे जीर्णे प्रयोजयेत् ॥ १४८ ॥
कासे श्वासे कुमार्या च त्रिफलाकाथयोगतः ।
उन्मादे च धनुर्वातमभृताक्वाथयोगतः ।
इत्येवं रोगतापघ्नो रसश्चन्द्रोदयाह्वयः ॥ १४९ ॥

---

१ च. निरुन्ध्य । २ क. वल्ल वारत्रय देय पा॰ । ३ ट. ॰नार्थे वा॰ । ४ न ॰रादिर॰ । ५ क. ॰तम. । ६ क. ॰न्धाभ्रे पेष्य ज॰ । ७ ड. साप्सन ८ क. ॰र्याथ त्रि॰ ।

**अथ जीर्णज्वरारिः**—नागं वङ्गं रसं ताम्रं गन्धकं टङ्कणं तथा ।
सूतं विषं च [1]नेपालं हरितालं समं तथा ॥ १५० ॥
वटक्षीरेण मर्द्याथ सर्वं कुर्यात्तु गोलकम् ।
तं गोलकं भाण्डमध्ये पाचयेद्दीपवह्निना ॥ १५१ ॥
[2]तं गोलं शीतलं कृत्वा भृङ्गराजेन मर्दयेत् ।
आर्द्रकस्य रसेनापि मर्दयेच्च पुनः पुनः ॥ १५२ ॥
चणप्रमाणवटकान्रसेनाऽऽर्द्रस्य दापयेत् ।
गुञ्जाद्वयप्रमाणेन ज्वरं जीर्णं हरत्यसौ ॥ १५३ ॥

**अथ नवज्वरमुरारिः**—हरश्च गन्धकं चैव कुनटी च समं समं ।
मर्द्यं कर्कोटिकापाथ रसेन विनियोजयेत् ॥ १५४ ॥
नवज्वरमुरारिः स्याद्वल्लं शर्करया सह ।
तन्दुलीयरसेनानुपानं शर्करयाऽपि वा ॥ १५५ ॥
गुञ्जाद्वयप्रमाणेन ज्वरान्हन्ति नवान्हठात् ॥ १५६ ॥१४१८॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये ज्वरचिकित्सितं नाम द्वादशोऽध्यायः ॥ १२ ॥

---

अथ त्रयोदशोऽध्यायः ।

[ अथ रक्तपित्तादिचिकित्सनम् । ]

**अथ चन्द्रकलारसः**—कट्वम्लतीक्ष्णलवणोष्णविदाहिरूक्षैः
पित्तं प्रदुष्टमशनैरतिसेवितैस्तैः ।
संदूष्य रक्तमनुलोमविलोममार्गवर्ति
निर्यात्ययं रुधिरपित्तगदोऽतिमात्रम् ॥ १ ॥
पंचाम्रमायसं चूर्णं सूतेन्द्रं समभागिकम् ।
लोहाभ्रगन्धकं रक्तपित्तहरं परम् ॥ २ ॥
द्राक्षादन्तानां स्वरसस्य कर्षं रसेन्द्रगुञ्जामधुशर्करायुतम् ।
लिहन्प्रभाते मनुजो निहन्यादुग्राकरं दारुणरक्तपित्तम् ॥ ३ ॥

---

१ क. [illegible] । २ ङ. [illegible] । ३ क. [illegible] । ४ क. [illegible] । ५ क. [illegible] । ६ क. [illegible] । ७ क. [illegible] । ८ ग. [illegible] । ९ ङ. [illegible] । १० घ. [illegible] । ङ. [illegible] । ११ [illegible] । १२ ङ. [illegible] । १३ ङ. [illegible] । १४ ङ. [illegible] ।

पारदं हिङ्गुलकं च ऊर्ध्वयन्त्रेण लेपयेत् ।
कुक्कुटाण्डरसं भागं टङ्कणक्षारमेव च ॥ ४ ॥
गन्धकस्य तथा भागं घृतेन परिमर्दयेत् ।
सिद्धं रसं समादाय जीरतोयेन दापयेत् ॥ ५ ॥
दिनानि त्रीणि माषं च ग्रहणीरक्तदोषजित् ।
ज्वरदाहविनाशं च रक्तपित्तविनाशनम् ॥ ६ ॥
प्रत्येकं तोलमानेन सूतकं ताम्रभस्मकम् ।
दिनानि त्रीणि गुटिकां कृत्वा चाग्नौ विनिक्षिपेत् ॥ ७ ॥
ततः शुष्कं समादाय पुनरेव च मर्दयेत् ।
समस्तैः समगन्धैश्च कृत्वा कज्जलिकां च तैः ॥ ८ ॥
मुस्तादाडिमदूर्वाभिः केतकीस्तनवारिभिः ।
सहदेव्याः कुमार्याश्च पर्पटस्यापि वारिणा ॥ ९ ॥
रामशीतलिकातोयैः शतावर्या रसेन च ।
भावयित्वा प्रयत्नेन दिवसे दिवसे पृथक् ॥ १० ॥
तिक्तं गुडूचिकासत्त्वं पर्पटोशीरमागधीः ।
शृङ्गाटं सारिवा चैषां समानं सूक्ष्मचूर्णकम् ॥ ११ ॥
द्राक्षादिककषायेण सप्तधा परिभावयेत् ।
ततः पोताश्रयं क्षिप्त्वा वट्यः कार्याश्चणोपमाः ॥ १२ ॥
अयं चन्द्रकला नाम रसेन्द्रः परिकीर्तितः ।
सर्वपैत्तगदध्वंसी वातपित्तगदापहः ॥ १३ ॥
अन्तर्बाह्यमहादाहविध्वंसनमहाक्षमः ।
ग्रीष्मकाले शरत्काले विशेषेण प्रशस्यते ॥ १४ ॥
कुरुते नाग्निमान्द्यं च महातापज्वरं हरेत् ।
भ्रमं मूर्छां हरत्याशु स्त्रीणां रक्तं महाश्रमम् ॥ १५ ॥
ऊर्ध्वाधोरक्तपित्तं च रक्तवान्तिं विशेषतः ।
मूत्रकृच्छ्राणि सर्वाणि नाशयेन्नात्र संशयः ॥ १६ ॥
[ इति रक्तपित्तचिकित्सा । इति चन्द्रकलारसः । ]
सपटोलकहिङ्गुलः सक्षौद्रो रक्तपित्तनुत् ।
नवनीतं सिता लाजा द्राक्षया सह भक्षयेत् ॥ १७ ॥

१ ड. °कुलीक । २ ग ऊर्ध्वय° । ३ क. ठ. ड मेलये । ४ ज. कुक्कुटरसमभाग । ५ ज °पनुर् । ६ क °सनिवारणम् । ७ घ °त्येकतो° । ८ क गुलिका । ९ घ. °र्वा च के° । १० ड श्रीगन्ध । ११ क ततो भाग्याश्र° । १२ क श्रमम्° । भ्रमम्° । १३ घ रक्तमहाश्रयम् । ड रक्तमहाश्रयम् । १४ ज °नीतसि° ।

मस्तके च घृतं दद्याद्रक्तपित्तहरं परम् ।
द्राक्षावासायुतं क्वथितं शर्कराभावितं पिबेत् ॥ १८ ॥
वासारसं सिताक्षौद्रैर्लाजान्वा शर्करासमान् ।
भक्षयन्रक्तपित्तार्तस्तृष्णादाहज्वरं जयेत् ।
धात्रीचूर्णं सितातुल्यं भक्षयेद्रक्तपित्तनुत् ॥ १९ ॥

**अथ कासचिकित्सा**—दोषाः शोषमनोभितापकुपिताः कुर्वन्ति कासं ततः
पित्तं पूतिकफं प्रपीतनयनः पूयोपमं ष्ठीवति ।
शीतोष्णेच्छुरकारणेन बहुभुक्स्निग्धप्रसन्नाननः
पार्श्वार्त्यल्पबलक्षयाकृतिरपि प्रादुर्भवत्यन्यथा ॥ २० ॥

**अथ रत्नकरण्डकरसः**—सार्कतीक्ष्णाभ्रकोऽगस्त्यकासमर्दवरारसैः ।
मर्दितो वेतसाम्लेन पिण्डितः कासनाशनः ॥ २१ ॥
तारेपिष्टिशिलां क्षिप्त्वा हरितालाच्चतुर्गुणाम् ।
वासागोक्षुरसाराभ्यां मर्दितः प्रहरद्वयम् ॥ २२ ॥
प्रस्विन्नो वालुकायन्त्रे गुञ्जाद्वितयसंमितः ।
कासं त्रिकटुनिर्गुण्डीमूलचूर्णयुतो हरेत् ॥ २३ ॥
भूनागाभ्रकयोः सत्त्वं कान्तहेमाभ्ररूप्यकम् ।
मुक्ताफलानि रत्नानि तार्प्यं वैक्रान्तमेव च ॥ २४ ॥
भस्मीकृतमिदं सर्वं पृथङ्मापमितं मतम् ।
निष्कमात्रामितं शुद्धं राजावर्तरजस्तथा ॥ २५ ॥
एतत्सर्वं समं योज्यं मर्दयित्वाऽम्लवेतसैः ।
रुद्ध्वा मूषोदरे कोष्ठ्यां धमेदाकाशदर्शनम् ॥ २६ ॥
शतवारं धमेदेवं मर्दयित्वाऽम्लवेतसैः ।
ततः संचूर्णिते चास्मिन्मुक्ताभस्म द्विशाणकम् ॥ २७ ॥
मरिचं पञ्चपाणेयं क्षिप्त्वा संमर्द्य यत्नतः ।
रम्ये करण्डके क्षिप्त्वा स्थापयेत्तदनन्तरम् ॥ २८ ॥

---

१ ख. क्थ्यातः । २ ड. °सात्राति° । ३ घ. °रसस्ति° । ४ ग. °जा वा शर्करासमाः । ५ ग. °क्षयेद्रक्त° । ६ क. हरेत् । ७ ड. प्रीन । ८ क °स्निग्ध प्र° । ९ ड नत. पा° । १० घ. °यश्चानल° । ११ घ. °पलः क्ष° । १२ ख. °भ्रकाग° । १३ ख. पिष्ठितः । १४ ख. तारपि° ग. तारे पिष्टे शि° । १५ ग. °संयुतः । १६ क. °मार्कराप्यक° । १७ ट. °रूप्यक° । १८ क. °मात्र मि° । ड. °मात्रमि° । १९ न. शत वा° । २० ख. °ते चाऽऽस्मि° । २१ क. ड. मरीच । २२ ड. °मशाणे° ।

सोऽयं रत्नकरण्डको रसवरो मध्वाज्यसंक्रामणो
हन्याच्छ्वासगदं ज्वरं ग्रहणिकां कासं च हिध्मामयम् ।
शूलं शोषमहोदरं बहुविधं कुष्ठं च हन्याद्गदा-
न्बल्यो वृष्यकरः प्रदीपनकरः स्वस्थोचितो वेगवान् ॥ २९ ॥

**अथ स्वयमग्निरसः**—शुद्धसूतस्य भागैकं भागैकं शुद्धगन्धकम् ।
भागत्रयं मृतं ताम्रं मरिचं पञ्चभागिकम् ॥ ३० ॥
मृताभ्रस्य चतुर्भागं भागमेकं विषं क्षिपेत् ।
भूताङ्कुशस्य भागैकं सर्वं चाम्लेन मर्दयेत् ॥ ३१ ॥
यामं भूताङ्कुशो नाम माषैकं वातकासजित् ।
अनुपानं लिहेत्क्षौद्रैर्बिभीतकफलत्वचः ॥ ३२ ॥
स्वयमग्निरसो नाम भक्ष्यो निष्कद्वयं द्व्यम् ।
पित्तकासारुचिश्वासक्षयकासांश्च नाशयेत् ॥ ३३ ॥

**अथ बोलबद्धरसः**—रसभस्म विषं तुल्यं गन्धकं द्विगुणं मतम् ।
बोलतालकबाह्लीककर्कोटीमाक्षिकं निशा ॥ ३४ ॥
कण्टकारीयवक्षारलाङ्गलीक्षारसैन्धवम् ।
मधूकसारं संचूर्ण्य सप्ताहं चाऽऽर्द्रकद्रवैः ॥ ३५ ॥
गुटिकां बदराकारां श्लेष्मकासापनुत्तये ।
भक्षयेद्बोलबद्धोऽयं रसः सश्वासपाण्डुजित् ॥ ३६ ॥

**अथाग्निरसः**—रसगन्धकपिप्पल्यो हरीतक्यक्षवासकम् ।
षडुत्तरगुणं चूर्णं बब्बूलक्वाथभावितम् ॥ ३७ ॥
एकविंशतिवाराणि शोषयित्वा विचूर्णयेत् ।
भक्षयेन्मधुना हन्ति कासमग्निरसो क्षयम् ॥ ३८ ॥

***अथाग्निरसः**—भृङ्गराजस्य पत्रस्य चूर्णेन मधुना सह ।
गोलकं धारयेद्वक्त्रे कासविष्टम्भशान्तये ॥ ३९ ॥
अर्कैरण्डस्य पत्राणां रसं पीत्वा च कासजित् ।
दन्तीमूलस्य धूमं वा निर्गुण्ड्या वा पिबेज्जयेत् ॥ ४० ॥

---

* घ. स्वयमग्निरसः ।

---

१ ड. ष । २ क. ठ. ड. °ध्नतम° । ३ क. लेपयेत् । ४ ज. °त्क्षौद्र बिभी° । ५ घ. °त्वचम् । ड. °त्वचा । ६ ड. °रमश्वास.भक्षोभिष° । ७ ड. °श्वासं क्षय पाण्डु च ना° । ८ घ. °लीक कर्कोटी° । ९ च. °टीशीर° । १० घ. °चूर्ण्य स° । ११ ट. °वारेण शो° । १२ ट. पत्र तु चूर्णेन म° । १३ घ. पिबन्नये° ।

त्रिकटु त्रिफला चैला जातीफललवङ्गकम् ।
एतेषां समभागानां समपूर्वैरसो भवेत् ॥ ४१ ॥
संचूर्ण्याऽऽलोडयेत्क्षौद्रे भक्ष्यो निष्कद्वयं द्वयम् ।
स्वयमग्निरसो नाम्ना क्षयकासनिकृन्तनः ॥ ४२ ॥
इन्द्रवारुणिकामूलं भृङ्गीकृष्णातिलैः सह ।
भक्षयेत्क्षयकासार्तो निष्कमात्रं प्रशान्तये ॥ ४३ ॥
इन्द्रवारुणिकामूलं देवदारु कटुत्रयम् ।
शर्करासहितं खादेदूर्ध्वश्वासप्रशान्तये ॥ ४४ ॥

अथ श्वासचिकित्सा—श्लेष्मोपरुद्धगमनः पवनोऽतिदुष्टः
संदूषयंस्तु जलान्नवहाश्च नाडीः ।
आमाशयोद्भवमिमं विदधात्युरःस्थं
श्वासं च वक्रगमनो हि शरीरभाजाम् ॥ ४५ ॥

अथ सूर्यावर्तरसः—सूतार्धं गन्धकं मर्द्यं यामैकं कन्यकाद्रवैः ।
द्वयोः समं ताम्रपत्रं पूर्वकल्केन लेपयेत् ॥ ४६ ॥
दिनैकं हण्डिकापक्वे पक्वमादाय चूर्णयेत् ।
सूर्यावर्तरसो ह्येष द्विगुञ्जः श्वासजिद्भवेत् ॥ ४७ ॥

अथ नीलकण्ठः—गन्धकं मरिचं साज्यं पिबेच्छ्वासकफापहम् ।
शिला हिङ्गु विडङ्गं च मरिचं कुष्ठसैन्धवम् ॥ ४८ ॥
मध्वाज्याभ्यां लिहेत्कर्षं श्वासकासकफापहम् ॥ ४९ ॥
सूतः षोडश तत्समो दिनकरस्तस्यार्धभागो बलिः
सिन्धुस्तस्य समैः सुसूक्ष्ममृदितः पट्टपिप्पलीचूर्णितः ।
जम्बीरस्वरसेन मर्दितमिदं तप्तं सुपक्वं भवे-
त्कासश्वासैकगुल्मगृल्जठरे पाण्डु लिहन्नाशयेत् ॥ ५० ॥
साधारणं तु वटकं वक्ष्यामि शृणु तत्त्वतः ।
पारदं गन्धकं चैव पलमेकं पृथक्पृथक् ॥ ५१ ॥
पलत्रयं त्रिकटुकं वङ्गमेकपलं क्षिपेत् ।
सर्वमेकत्र संयोज्य दिनानि त्रीणि मर्दयेत् ॥ ५२ ॥

---

१ ग. °षो नरमा° । २ च. ट. ठ. समेपू° । ३ ग. °द्वयद्व° । ४ ट. °रं शर्हा° । ५ च. °प्रं च शा° । ६ क. °मिद त्रि° । ७ ग. °रस्वः श्वा° । ८ च. वक्त्रग° । ९ ट. मर्द्य । १० ग. हण्डिमध्येण । ११ ग. °न्दुत्रासेक° । १२ ग. °मः स सू° । १३ घ. °ष्मलीकृर्णिताः । १४ ट. °चूर्णनः । १५ घ. °रसगु° । १६ ग. °ण्डुं लिह° ।

मूत्रेण च तथा त्रीणि दिनानि परिमर्दयेत् ।
अक्षप्रमाणवटकं छायाशुष्कं तु कारयेत् ॥ ५३ ॥
नित्यमेकं तु वटकं दिनानि त्रिंशदेव च ।
श्वासकासज्वरहरमग्निमान्द्यारुचिप्रणुत् ॥ ५४ ॥
रसभागो भवेदेको गन्धको द्विगुणो मतः ।
त्रिभागा पिप्पली ग्राह्या चतुर्भागा हरीतकी ॥ ५५ ॥
विभीतः पञ्चभागस्तु वासा षड्गुणिता भवेत् ।
भार्ङ्गी सप्तगुणा ग्राह्या सर्वं चूर्णं प्रकल्पयेत् ॥ ५६ ॥
बब्बुलक्वाथमादाय भावयेदेकविंशतिः ।
विभीतकप्रमाणेन मधुना गुटिकां चरेत् ॥
एकैकां भक्षयेत्प्रातः श्वासकासनिवृत्तये ॥ ५७ ॥
सूतं शुल्वं सुलोहं बलिममृतयुतं त्रित्रिकं रेणुकाब्दं
गण्डीरं केसराग्निं द्विगुणगुडयुतं मर्दयित्वा समस्तम् ।
कुर्यात्कोलास्थिमात्रान्सुरुचिरवटकान्भक्षयेत्प्राग्दिनादौ
पथ्याशी सर्वरोगान्हरति च नितरां नीलकण्ठाभिधानः॥५८॥

## अथ श्वासकासकरिकेसरीरसः ।

तारताम्ररसपिष्टिकाशिलागन्धतालसमभागिकं रसैः ।
आटरूषसुरसार्द्रसंभवैर्मर्दय प्रकुरु गोलकं ततः ॥ ५९ ॥
मृत्स्नया च परिवेष्ट्य गोलकं यामयुग्ममथ भूधरे पचेत् ।
गोलकेन कुरु तत्समं ततश्चाऽऽटरूषकटुकैश्च भावयेत् ॥ ६० ॥
श्वासकासकरिकेसरीरसो वल्लमस्य परिसेवयेद्बुधः ॥ ६१ ॥

**अथ सूर्यरसः**—रसगन्धकताम्राभ्रं कणाशुण्ठ्यूषणं समम् ।
मृतमेकं विषं चैकं सूर्यः कासादिनाशनः ॥ ६२ ॥

**अथ पर्पटीरसः**—रसगन्धकधान्याभ्रतालताप्योपलं क्रमात् ।
भार्गीवृद्धं वचाकुष्ठहरिद्राक्षारचित्रकैः ॥ ६३ ॥
सपाटाल्लाङ्गलीव्योपसैन्धवाक्षविषैः समम् ।
भावितं भृङ्गनीरेण हिक्कावैस्वर्यकासनुत् ॥ ६४ ॥

---

१ घ. ङ. गोमूत्रेण त°। २ घ. °माण व°। ३ घ.मार्गी।४ग. °रेत्। ५ च. °राग्निद्वि°। ६ घ. °येत्तान्दिना°। ७ ट. °टिका शि°। ८ क. °श्वर°। ९ ट. °ईयेत्प्रसु°। क. °ईयन्प्रकु°। १० ङ. °वेष्य गो°। ११ भ. गन्धकेन। १२ ज. कुरुसम। १३ भ. °नैश्च°। १४ घ. सर्व°। १५ ख. महापर्पटीरसः। १६ ज. °ताल ताप्य पत्र°। १७ च. °वृद्धव°।

पक्वताम्रे रसः पिष्टो वल्लिना हिध्मिनां हितः ।
चूर्णं पाठेन्द्रवारुण्योर्भाण्डे दत्वाऽथ कुनटीम् ॥ ६५ ॥
तत्पृष्ठे शुद्धसूतं तु कुनर्ध्यंशं प्रदापयेत् ।
सूतार्धं कुनटीचूर्णं तस्यार्धं पूर्वमूलिकाः ॥ ६६ ॥
चूर्णं दत्वा पचेच्चुल्ल्यां यामाष्टं मृदुवह्निना ।
शिलोपूतो रसो नाम हन्ति हिक्कां त्रिगुञ्जकः ॥ ६७ ॥
क्वाथं रास्नाबृहत्यग्निबलादुग्धैश्च पाययेत् ।
हिक्किनं पाययेद्धूमं पत्रैः शिखिनिशोद्भवैः ॥ ६८ ॥
रसं द्विगुणगन्धेन मर्दयित्वा सभृङ्गकम् ।
लोहपात्रे घृताभ्यक्ते द्रावितं बदराग्निना ॥ ६९ ॥
ऊर्ध्वाधो गोमयं दत्वा कदल्याः कोमले दले ।
स्निग्धे पटे स्रुपोदर्व्या पर्पटाकारतां नयेत् ॥ ७० ॥
लोहपात्रे विनिक्षिप्त्वा लोहपर्पटिका भवेत् ।
ताम्रपात्रे विनिक्षिप्त्वा ताम्रपर्पटिका भवेत् ॥ ७१ ॥
विषपादं च युञ्जीत तत्साध्येष्वामयेषु च ।
सुरसाया जयन्त्याश्च कन्यकाटकरूपयोः ॥ ७२ ॥
त्रिफलाया मुनेर्भाङ्ग्या मुण्ड्यास्त्रिकटुचित्रयोः ।
भृङ्गराजस्य वह्नेश्च प्रत्यहं द्रवभावितम् ॥ ७३ ॥
आर्द्रकस्य रसेनापि सप्तधा भावयेत्पुनः ।
अङ्गारैः स्वेदयेदीषत्पर्पटीरसमुत्तमम् ॥ ७४ ॥
गुञ्जाष्टकं ददीतास्य ताम्बूलीपत्रसंपुतम् ।
पिप्पलीदशकैः क्वाथं निर्गुण्ड्याश्चानुपाययेत् ॥ ७५ ॥
*त्रिकण्टकस्य मूलानि शुण्ठीं संक्षुद्य निक्षिपेत् ।*
अजाक्षीरे सनीरांशे यावत्क्षीरं विपाचयेत् ॥ ७६ ॥
तत्क्षीरं पाययेद्रात्रौ सकणं भोजनेऽपि च ।
कूष्माण्डं वर्जयेच्चिञ्चां वृन्ताकं कर्कटीमपि ॥ ७७ ॥

---

१ ह. कुनटीम् । २ क. ठ. मूताभ्र । ३ ध. ह. °लिराम् ज. °लिरी । ४ घ. °दुग्धाग्निना । ५ ॰ °लपुनो । ज. °लाघातो । ६ च. क्वाथ्य । ७ ह. °लामृद्भैश्च । ८ च. °येद्दुग्ध प° । ९ ध. रसात्त्रिगु° । घ. रस त्रिगु° । १० ज. स्निग्धया लोहदर्व्या च । ११ ह. वाऽयोदर्व्या । १२ ध. °क्षिप्ता लो° । १३ घ °पाद् वि° । १४ ज. °क्षिप्ता ता° । १५ ह. मता । १६ ह. द्रवेणापि १७ ध °नि निर्गुण्डी पेत्र लि° । १८ च. °रार्धे या° ।

आरनालं च तैलं च संसर्गं च विवर्जयेत् ।
मासत्रयं च सेवेत कासश्वासनिवृत्तये ॥ ७८ ॥
स हिङ्गुजीरकव्योषैः शमयेद्ग्रहणीं रसः ।
दशमूलाम्भसा वातज्वरं त्रिकटुना कफम् ॥ ७९ ॥
ज्वरं मधुकसारेण पञ्चकोलेन सर्वजम् ।
यक्ष्माणं मधुपिप्पल्या गोमूत्रेण गुदाङ्कुरान् ॥ ८० ॥
शूलमैरण्डतैलेन पाण्डुशोफं सगुग्गुलुः ।
कुष्ठानि भृङ्गभल्लातबाकुचीपञ्चनिम्बकैः ॥ ८१ ॥
धत्तूरबीजसंयोगान्मेहोन्मादविनाशनी ।
अपस्मारं निहन्त्याशु व्योषनिम्बुदलैः सह ॥ ८२ ॥
स्तनंधयशिशूनां तु नितरां पर्पटी हिता ।
पथ्याक्षचूर्णादिवशोद्याधींश्चान्यान्सुदुस्तरान् ॥ ८३ ॥
सजातीफलैःशीतोदं योजयेत्पर्पटीरसम् ।
पित्ताजीर्णे शिरश्चास्य शीततोयेन सेचयेत् ॥ ८४ ॥
नस्यं निष्ठीवनं धूमं तीक्ष्णं वमनरेचनम् ।
अन्नं रूक्षाल्पतीक्ष्णोष्णं कटुतिक्तकषायकम् ॥
चिरकालस्थितं मद्यं योजयेत्कफरोगिणे ॥ ८५ ॥
अथ मन्थानभैरवः—मृतसूतं मृतं ताम्रं हिङ्गु पुष्करमूलकम् ।
सैन्धवं गन्धकं तालं कटुकं चूर्णयेत्समान् ॥ ८६ ॥
देवदालीपुनर्नव्योर्निर्गुण्डीमेघनादयोः ।
तिक्तकोशातकीद्रावैर्दिनैकं मर्दयेद्दृढम् ॥ ८७ ॥
माषमात्रं लिहेत्क्षौद्रै रसं मन्थानभैरवम् ।
कफरोगप्रशान्त्यर्थं निम्बकाथं पिबेदनु ॥ ८८ ॥
कर्षैकं गन्धकं शुद्धं घृतैश्चोष्णोदकैः पिबेत् ।
कफं हन्त्यथवा क्षौद्रैः पञ्चवक्त्ररसः खलु ॥ ८९ ॥

---

१ ड. सगम । २ ड. °ल्पैरण्डरोजन । ३ क. °शोथ स° । ४ ज. °चीनिम्बपञ्चकैः । ५ प. °निम्बु यैः । ६ ग. °गा महोन्माद° । ट. °गा मोहो° । ञ. °गा मदोन्माद° । ७ प. °निम्बद° । ८ ड. पथ्यो पचू° । ९ प °शादूर्ध्वाश्वा° । १० ञ. °म्बुदुसहान् । ११ ज. °लैर्मातो° । १२ ज. सेचयेत् । १३ ड. °शि- णाम् । १४ अ. मृत स° । १५ ग. क्षौद्रे र° । १६ ग. रसो मन्थानभैरव । १७ ड. त्रिस ।

विश्वादित्रिकनिर्गतद्रवनिशाकीरप्रियोत्थं दलं
नीलग्रीवगलाभपं सुरपतेस्तोतायनेत्राभिधम् ।
विद्वेरपुङ्खवतीकृमिप्रतिभटं निर्गुण्डिकावारिणा
तुल्यांशाश्वणकप्रमाणवटिकाःसश्वासकासापहाः॥९०॥१५०८

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये रक्तपित्तकासश्वासहिध्मावैस्वर्यचिकित्सितं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

अथ चतुर्दशोऽध्यायः ।

[ अथ राजयक्ष्मादिचिकित्सनम् । ]

**अथ राजयक्ष्मचिकित्सा**—अग्निमान्द्यं ज्वरः शैत्यं वान्तिः शोणितपूयपोः।
सत्त्वहानिश्च दौर्बल्यं रोगराजस्य लक्षणम् ॥ १ ॥

**अथ कनकसुन्दरः**—रसस्य तुल्यभागेन हेमभस्म प्रकल्पयेत् ।
तालकं गन्धकं तुत्थं माक्षिकं रसकं शिलाम् ॥ २ ॥
रससाम्येन युञ्जीत तुत्थं भस्मीकृतं न्यसेत् ।
वह्नौ भस्मीकृतं चैव मयूरकंठतुत्थकम् ॥ ३ ॥
किंचिट्टङ्कणकं दत्वा मार्जारस्य विशा युतम् ।
प्रथमं पुटयेदम्ना द्वितीयं मधुना सह ॥ ४ ॥
तालकं शोधयेच्चात्र कूष्माण्डक्षारपाचनात् ।
तैले पचेत्ततः सम्यक्चूर्णे वा परिशोधयेत् ॥ ५ ॥
गन्धकं शोधयेद्दुग्धे रसकं नरवारिणा ।
माक्षिकं सिन्धुसंयुक्तं बीजपूररसे पचेत् ॥ ६ ॥
जयन्तीद्रवसंपिष्टां शिलां तत्रैव पाचयेत् ।
एकीकृत्य ततः सर्वमर्कक्षीरेण मर्दयेत् ॥ ७ ॥
जयन्तीभृङ्गराजाभ्यां रामाशाद्राक्द्रानुभिः ।
अगस्तिनाट्टन्धीभ्यां च प्रत्येकं दिवसं शनैः ॥ ८ ॥
ततस्तु गोस्तनं बद्ध्वा पचेत्पूर्ववदाहृतः ।
चूर्णयित्वा ततः सम्यक्भावयेदार्द्रकाम्बुना ॥ ९ ॥

१ ह. 'त्रिवर्गत'। २ ग. 'निर्गत ड'। ट. 'निर्गतेन्द्रव'। ३ म. 'लाभप'। ४ क. 'स्तार्भायनेत्राभिधा। ५ ख. 'निभ। ६ छ. 'ट्टकुत्व'। ७ क. 'रुयशी। ख. 'श्वासी क'। ८ ह. 'सगान्धं'। ९ ग. 'वटका मं'। १० ग. 'सम्रहेत्। ११ क. 'र्ग प्रयु'। ग. 'सम्यो प्रयु'। १२ क. 'कम्। ख. 'बरर यु'। १३ ह द्वितीय। १४ ह. 'देवेत्र कु'। १५ क. त्यसेत्। १६ म. 'स्याशं'। १७ ह. 'न्दुकं'। १८ क. 'द्दहन।

सप्तधा व्योषनिर्यासे रसः कनकसुन्दरः ।
गुञ्जाद्वयं त्रयं वाऽस्य राजयक्ष्मापनुत्तये ॥ १० ॥
मधुना पिप्पलीभिश्च मरिचैर्वा घृतान्वितैः ।
लेहयेद्रोगिणं वैद्यो वयोबलविशेषवित् ॥ ११ ॥
जयपालरजोभिर्वा शुण्ठ्या गव्यघृताक्तया ।
ददीत शूलिने प्राज्ञो गुल्मिने च विशेषतः ॥ १२ ॥
कादिवर्ज्यं चरेत्पथ्यं हृद्यं बल्यं च पूर्ववत् ।
संनिपाते ददीतैनमार्द्रकद्रवसंयुतम् ॥ १३ ॥
गुडूचीत्रिफलाक्वाथैः संस्कृतो गुग्गुलुर्वरः ॥ १४ ॥

**अथ राजमृगाङ्कः**—रसभस्म त्रयो भागा भागैकं हेमभस्मकम् ।
मृतताम्रस्य भागैकं शिलागन्धकतालकम् ॥ १५ ॥
प्रतिभागद्वयं शुद्धमेकीकृत्य विचूर्णयेत् ।
वराटान्पूरयेत्तेन अजाक्षीरेण टङ्कणम् ॥ १६ ॥
पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे तान्निरोधयेत् ।
शुष्कं गजपुटे पच्याच्चूर्णयेत्स्वाङ्गशीतलम् ॥ १७ ॥
रसो राजमृगाङ्कोऽयं चतुर्गुञ्जः क्षयापहः ।
दशपिप्पलिकाक्षौद्रैर्मरिचैकोनविंशतिः ॥
सघृतैर्दापयित्वाऽथ रोगराजप्रशान्तये ॥ १८ ॥

**अथ शङ्खेश्वरः**—शङ्खस्य बलयान्निष्कं चतुर्निष्कं वराटकम् ।
निष्कार्धं नीलतुत्थस्य सर्वतुल्यं तु गन्धकम् ॥ १९ ॥
गन्धतुल्यं मृतं नागं नागतुल्यं मृतं रसम् ।
टङ्कणं मृततुल्यं स्यान्मर्द्यं पाच्यं मृगाङ्कवत् ॥ २० ॥
राजयक्ष्महरः सोऽयं नाम्ना शङ्खेश्वरो मतः ॥ २१ ॥

**अथ मृगाङ्कपोटली**—शङ्खनाभिं गवां क्षीरे पेषयेन्निष्कषोडश ।
तेन मूषा प्रकर्तव्या तन्मध्ये भस्मसूतकम् ॥ २२ ॥
निष्कार्धं गन्धकात्रीणि चूर्णीकृत्य विनिक्षिपेत् ।
रुद्ध्वा तद्वेष्टयेद्वस्त्रे मृत्तिकां लेपयेद्बहिः ॥ २३ ॥
शोष्य गजपुटे पच्यान्मूषया सह चूर्णयेत् ।
गुञ्जैकमनुपानेन क्षयं हन्ति मृगाङ्कवत् ॥ २४ ॥

---

१ घ °गिणा वै° । २ क ठ °पन । ३ घ जेपान्स्र र° । ४ ग °ण्डे तानि° । ५ घ °पयेद्राऽथ । ६ न. °नाभिग° । क °नाभिंगवा । ७ क °ङ्ग । ८ ग °द्वस्त्रेस्तत्° ।

**अथ मृगाङ्कपोटली**—मातुलुङ्गस्य मूलानि लौंजचूर्णं स सैन्धवम् ।
पिप्पलीमधुना युक्तं खादेद्वान्तिप्रशान्तये ॥ २५ ॥
रजनीशङ्खपूगं च निष्कैकं वान्तिनाशनम् ।
निष्कार्धं टङ्कणं वाऽथ काचमाचीद्रवैः पिबेत् ॥ २६ ॥
मृगन्धां वा पिबेत्खादेत्सर्ववान्तिप्रशान्तये ।
अलक्तकरसं क्षौद्रे रक्तवान्तिहरं पिबेत् ॥ २७ ॥
द्विनिष्कं भस्म सूतस्य निष्कैकं स्वर्णभस्मकम् ।
शुद्धगन्धकनिष्कौ द्वौ चूर्णित्वा चित्रकद्रवैः ॥ २८ ॥
द्वियामान्ते विशोष्याथ तेन पूर्याः वराटिकाः ।
वराटान्मृन्मये भाण्डे रुद्ध्वा गजपुटे पचेत् ॥ २९ ॥
स्वाङ्गशीतं विचूर्ण्याथ पोटलीं हेमगर्भिताम् ।
मृगाङ्कवच्चतुर्गुञ्जं भक्षितं राजयक्ष्मनुत् ॥
स्वयमग्निरसं खादेद्विनिष्कं राजयक्ष्मनुत् ॥ ३० ॥

**अथ पञ्चामृतरसः**—भस्म सूताभ्रलोहानां शिलाजतु विषं समम् ।
गुडूचीत्रिफलाकाथैः संस्कृतं गुग्गुलं तथा ॥ ३१ ॥
मृतं नेपालताम्रं च सूतस्थाने नियोजयेत् ।
एकीकृत्य द्विगुञ्जं तद्भक्षयेद्राजयक्ष्मनुत् ॥ ३२ ॥
पञ्चामृतरसो नाम ह्यनुपानं च पूर्ववत् ।
हरेत्क्षीराजगन्धाभ्यां जयन्ती वा क्षयापहा ॥ ३३ ॥

**अथ लोकनाथरसः**—तुल्यं पारदगन्धकं त्रिकटुकं ताभ्यां रजः फल्गुजं
तैस्तुल्यं च भवेत्कपर्दभसितं स्यात्पारदाट्टङ्कणम् ।
पादांशं सकलैः समानमरिचं लिह्यात्क्रमात्साज्यकं
यावन्निष्कमितं भवेत्प्रतिदिनं मासात्क्षयः शाम्यति ॥ ३४ ॥
रसस्य भस्मना हेम पादांशेन प्रकल्पयेत् ।
गन्धकं द्विगुणं दत्त्वा मर्दयेच्चित्रकाम्बुना ॥ ३५ ॥
चराचरास्ये संपूर्य टङ्कणेन निरुध्य च ।
भाण्डे चूर्णमलिप्तेऽथ क्षिप्त्वा रुन्धीत मृन्मया ॥ ३६ ॥

---

१ क °हीरम । २ क. °शुष्कि° । ३ ङ. °स्तन्धीन वा लाक्षाचूर्णसमन्वितम । ४ ग °गाजा° मृ । ५ ङ. °भुमङ्कु° । ६ घ चाप । ७ घ स्मर्त्र्य वा° । ८ घ द्वौ मर्दयित्वा° । ९ अ °ग्भंगाम् । १० ग. °क्ष्मान्त् । ११ घ गुग्गुलं । १२ क ङ. च रसेन्द्र ।

शोषयित्वा पुटेद्रुते ऽरत्निमात्रे ऽपराह्णके ।
स्वाङ्गशीतलमुद्धृत्य चूर्णयित्वाऽथ विन्यसेत् ॥ ३७ ॥
एष लोकेश्वरो नाम पुष्टिवीर्यविवर्धनः ।
गुञ्जाचतुष्टयं चाऽऽज्यं मरिचैश्च समन्वितम् ॥ ३८ ॥
खादेत्परमया भक्त्या लोकेशे सर्वदर्शिनि ।
अङ्गकार्श्येऽग्निमान्द्ये च कासहिक्के रसो ह्ययम् ॥ ३९ ॥
मरिचैर्घृतसंयुक्तैः प्रदातव्यो दिनत्रयम् ।
लवणं वर्जयेत्तत्र साज्यं सदधि भोजनम् ॥ ४० ॥
एकविंशदिनं यावन्मरिचं सघृतं पिबेत् ।
पथ्यं मृगाङ्कवद्देयं शयीतोत्तानपादतः ॥ ४१ ॥
वमने संप्रवृत्ते तु गुडूचीद्रवमाहरेत् ।
मधुना पाययेत्सार्धं दग्धवृन्ताकमाशयेत् ॥ ४२ ॥
स्नानं शीतलतोयेन मूर्ध्नि धारां विनिक्षिपेत् ।
जाते श्लेष्मविकारे तु कदलीफलमाहरेत् ॥ ४३ ॥
भृष्ट्वा तन्मरिचैः सार्धं भोजयेत् श्लेष्मनुत्तये ।
आर्द्रकं मधुमिश्रं वा गुडार्द्रकमथापि वा ॥ ४४ ॥
भृष्ट्वा कुस्तुम्बरीं मापात्रिस्तुपांश्चूर्णयेत्ततः ।
शर्कराघृतमिश्रं तद्दद्यादरुचिशान्तये ॥ ४५ ॥
भृष्ट्वा कुस्तुम्बरीं सम्यग्घृते शर्करया पिबेत् ।
एलां मरिचसंयुक्तां यावद्भ्रान्तिः प्रशाम्यति ॥ ४६ ॥
अजमोदं विडङ्गं च पिष्ट्वा तक्रेण पाययेत् ।
कृमिकोपप्रशान्त्यर्थं क्वाथं वातप्रमुस्तयोः ॥ ४७ ॥
संस्कृत्य दुग्धिकां वह्नौ विरेके च प्रयोजयेत् ।
ईषद्भृष्ट्वा जयाचूर्णं मधुना खादयेन्निशि ॥ ४८ ॥
अङ्गतोदे घृतेनाङ्गं मर्दयित्वोष्णवारिणा ।
स्नापयेद्रोगिणं वैद्यो लोकनाथं च संस्मरेत् ॥ ४९ ॥

**अथ वैद्यनाथरसः**—शङ्खस्य वलयं निष्कं चतुर्निष्कं वराटिकाः ।
कर्षांशं नीलकटकं तुत्थं गन्धोऽश्मटङ्कणम् ॥ ५० ॥

---

१ ट °टे गर्ते । २ च चाज्यम° । ३ ङ खादयेत्परया । ४ च आनङ्गे° । ५ च °रीमाषत्रिस्तुपां चूर्ण° । ६ च. °घृतशर्करया पचेत । ७ च °द्भ्रान्तिप्रशान्तये । ८ क °मोदा वि° । ९ ङ °दये कोष्ण° । १० ग °थ रम स्मरन् । ११ क ठ ङ °स्मरन् । १२ च °निष्कां वराटिकाम् । १३ ख नीलतुत्थं च तालगन्धाश्मटङ्कणम् । १४ ग °-धाश्मट° ।

व्रणपूतिपूयजुष्टं नखविवरं मङ्क्षु रोपयत्यभया ।
नानाविधैः क्रिमैतैरास्फोतारविकुरण्टकंसीरैः ॥ ७ ॥
सकुष्ठं जीरकं तोयैः पिष्ट्वा लेपेन नाशयेत् ।
पुत्रजीवस्य वा मज्जां तोयैः पिष्ट्वा प्रलेपयेत् ॥ ८ ॥
शिग्रुमूलं निशातोयैः कक्षाग्रन्थिहरं लिपेत् ।
विषं पुनर्नवामूलं जललेपेन तं जयेत् ॥ ९ ॥
सर्वेषां स्तनरोगाणां रक्तमोक्षः प्रशस्यते ।
पूयपक्कः स्तनो यः स्याल्लिपस्तस्यावपाटने ॥ १० ॥
एकवीरस्य मूलं तु अजामूत्रेण लेपयेत् ।
तत्क्षणात्स्फुटते पक्वं शस्त्रैर्वा स्फोटयेद्विपक्‍ ॥ ११ ॥
षष्टीनिम्बहरिद्रा च निर्गुण्डीधातकीसमम् ।
चूर्णं स्तनव्रणे देयं रोपणं कुरुते हितम् ॥ १२ ॥
मध्वाज्यैर्देवदारुं च पिष्ट्वा वार्तं प्रलेपयेत् ।
पूयपक्के स्तने क्षिप्त्वा रोपणं कुरुते क्षणात् ॥ १३ ॥
लिङ्गव्याधौ लोहितं स्रावयित्वा पश्चाद्धोलं भक्षयेत्तस्य तुच्चे॥१४॥
उदुम्बरवटाश्वत्थसाम्रजम्बूत्वचः शृतम् ।
जलैः क्वाथं च तेनैव क्षालयेल्लिङ्गपाकनुत् ॥ १५ ॥
कुमारीरससंपिष्टं जीरकं लेपयेद्विपक्‍ ।
तेन दाहश्च पाकश्च शममाप्नोति निश्चितम् ॥ १६ ॥
महाशङ्खं जलैर्घृष्ट्वा तेन लिङ्गं प्रलेपयेत् ।
घोण्टाफलं च वा तोयैः सारं वा खदिरोत्थितम् ।
जलैः पिष्टं प्रलेपोऽयं लिङ्गरोगहरं पृथक् ॥ १७ ॥
सुगन्धफघृतैर्लेपः पक्वलिङ्गे सुखावहः ।
निम्बखादिरमञ्जिष्ठाचूर्णं चापतनं जयेत् ॥ १८ ॥
पंचविश्वारसैर्घृष्टं सैन्धवं रोपयेद्व्रणम् ।
ग्रन्थिः कक्ष्यां चै जघने शममाप्नोति नान्यथा ॥ १९ ॥
शिग्रुमूलं त्वचस्तोयैः पिष्ट्वा लेपेन तं जयेत् ।
कुष्ठजीरकपोन्लेपस्तोयैर्ग्रन्थिप्रशान्तये ॥ २० ॥

---

१ प. वसारैः। २ ग. °मूर्गनि°। ३ घ. पक्वपार्श्वे°। ४ घ. मर्न क्षित गं°। ५ घ. क्षिप्ता। ६ घ. श्वाद्दालं। ७ ग. नूरम्। ८ घ. जलै घृट्वा। ९ घ. °रोहरं। १० घ. °ल्लिङ्गु°। ११ घ. नरिदैव संपृष्टं। १२ घ. शा°। १३ घ. °मूलत°।

अश्वत्थस्य त्वचो भस्म चूर्णेन सह मिश्रितम् ।
नवनीतं द्वयोस्तुल्यं मर्द्यं तेन विलेपनात् ॥ २१ ॥
आसेने गुदपार्श्वे च कक्ष्यां च पिटिकां जयेत् ॥ २२ ॥
गोमूत्रे क्षालयेत्तां च लेपो बाकुचिबीजकैः ।
कृत्वा कण्डूं निहन्त्याशु चित्रकं वा गवां जलैः ॥
नरमूत्रेण सर्पाक्षीं पिष्ट्वा लेपेन तां जयेत् ॥ २३ ॥
लवङ्गजानां लवकं कर्पूरं चणसंमितम् ।
दरदं तोलमानं च सर्वं खल्वे विचूर्णयेत् ॥ २४ ॥
ब्रह्मवृक्षं कोकिलाक्षैः सर्वं यत्नेन मर्दयेत् ।
यावत्कज्जलसंकाशं श्यामतां च तथैव च ॥ २५ ॥
चतुर्दशसमा कार्या पुडिका वन्धयेद्विपक् ।
रविवारे समादेया ह्यङ्गारे छगणोद्भवे ॥ २६ ॥
तां निक्षिप्याथ संगोप्य नासिकां विवृतां नयेत् ।
मुखमाच्छाद्य श्वासेन यातायातेन ग्राहयेत् ॥ २७ ॥
वीटिकापूर्णवदनो द्विवारं कारयेत्सदा ।
एवं सप्तदिनं कृत्वा पश्चात्स्नानादिकं चरेत् ॥ २८ ॥
पथ्यं निर्लवणं देयं जलं शीतं निषेवयेत् ।
अनेन योगराजेन लिङ्गव्याधिः प्रशाम्यति ॥ २९ ॥इति धूमः।
लेपयेत्काञ्चनीमूलं नरमूत्रेण पेषितम् ।
कण्डुपामाः शमं यान्ति सर्वाङ्गीणा न संशयः ॥ ३० ॥
शाखोटस्य त्वचस्तोयैः पक्त्वा क्वाथं समाहरेत् ।
पिबेद्गोमूत्रसंतुल्यं पामार्तः सुखमाप्नुयात् ॥ ३१ ॥
पादकण्डुहरं कुर्यान्नवनीतेन म्रक्षणम् ।
हयारिपत्रधूपेन स्वेदनं तदनन्तरम् ॥ ३२ ॥
पाददाहहरं कार्ये तिलाद्द्विगुणबाकुची ।
चूर्णिता मधुसर्पिर्भ्यां द्विकर्षं तत्प्रशान्तये ॥ ३३ ॥
पादकण्डूविनोदार्थं नवनीतेन म्रक्षणम् ।
पथ्या घृतेन संचूर्ण्य मर्दनं करपादयोः ॥ ३४ ॥

---

१ घ. तेनात्रलेपयेत् । २ घ. °सने गु° । ३ घ. °नु भिन्न वाऽथ ग° । ४ ग नरक । ५ घ क कण्डूपामा शम याति सर्वाङ्गा नात्र संशय- । ६ ट. °वीङ्गानामसं° । ७ घ. मृक्षणम् । ८ च. °हरं का° । ९ झ. निल्हिगु° । १० ग. भक्षणम् । घ मृक्षणे । ११ पथ्य घृतस्य मोदन म° ।

स्फुटितत्वनिवृत्त्यर्थं पवचिञ्चार्धपक्कया ।
शिलादिना कृते भेदे पड्गुणं च द्रवं क्षिपेत् ॥ ३५ ॥
गुडगुग्गुलुसिन्दूरमुशीरं गैरिकं मधु ।
मदनं घृतसंयुक्तं पादस्फोटे प्रलेपयेत् ।
सप्ताहात्स्फुटितौ पादौ स्यातां पङ्कजसंनिभौ ॥ ३६ ॥
मदनं सिक्थकं तुल्यं सामुद्रं लवणं तथा ॥ ३७ ॥
महिषीनवनीतेन सुतप्तालेपनाद्भवेत् ।
सप्ताहात्स्फुटितौ पादौ जायेते कमलोपमौ ॥ ३८ ॥
रसं गन्धं समं मर्द्यं द्वाभ्यां तुल्यं च काञ्चनम् ।
दिनैकं चित्रकद्रावैः पिष्ट्वा लेपं प्रलेपयेत् ॥ ३९ ॥
कण्डुगण्डं खुडं हन्ति गुल्फयोरन्तरुत्थितम् ।
धात्रीफलरसक्षीरैः पानं स्यात्स्वरभङ्गनुत् ॥ ४० ॥
देवदारुकणाव्योषशताह्वापत्रकं शिला ।
वचासैन्धवशिग्रूत्थमूलं पेष्यं समं समम् ॥ ४१ ॥
कर्षैकं मधुसर्पिभ्यां मासमात्रं सदा लिहेत् ।
मासैकं कर्षकर्षं च किंनरैः सह गीयते ॥ ४२ ॥
सैन्धवेन्द्रयवं रात्रौ मरिचं चोष्णवारिणा ।
पाययेत्कर्षमात्रं तु गलदाहप्रशान्तये ॥ ४३ ॥
करञ्जबीजमज्जां तु द्विनिष्कां चोष्णवारिणा ।
गलदाहहरं खादेत्पथ्या वा क्षौद्रसंयुता ॥ ४४ ॥
वन्ध्यानागबलार्कत्वचां चूर्णं च लेपयेत् ।
महिषीनवनीतेन स्तनौ पीनौ स्थिरौ भवेत् ॥ ४५ ॥
श्यामानिशावल्लीराजीलवणं क्राथयेत्समम् ।
तोयैरष्टगुणैरेव पादशेषं समाहरेत् ॥ ४६ ॥
तिलतैलं क्राथपादं तैलार्धं माहिषं घृतम् ।
स्नेहशेषं पचेत्तेन नस्येन मासमात्रके ॥ ४७ ॥
बालादिवृद्धनारीणां यौवनं कुरुतेऽद्भुतम् ॥ ४८ ॥

---

१ ज. °रते लें°। २ घ. °मम°। ३ घ. कार्य। ४ घ. प्रकारये°। ५ घ. पदौ गन्दहुर्ग हन्ति गुल्फयोरन्तरुत्थितं ध्रुवम्। ६ ग. °रस क्षी°। ७ ग. पानं। ८ घ. °स्येदगुं°। ९ घ °नाहतं°। १० घ. कुर्वं यथा नृ°। ११ घ. °नागार्क°। १२ घ. °नस्य तेन समाचरेत् ॥ ४७॥ १३ घ. बला°।

कुरुबत्वक्कषायेण तत्कल्केन च साधितम्[1] ।[2]
तैलं तु वनितानां च कुचकुम्भव्रणापहम् ॥ ४९ ॥
शुल्वचूर्णं रसे जीर्णं मदयन्ती पुनर्नवा ।
मेषशृङ्गीरसश्चैता व्रणशोषणरोपणम् ॥ ५० ॥
कुम्भीपुष्पाणि चाऽऽदाय गिलयेद्रविवासरे ।
यावत्संख्यानि पुष्पाणि तावद्वर्षाणि स्नायुकम् ॥
न निर्याति न संदेहः सिद्धयोग उदाहृतः ॥ ५१ ॥
येन भस्म भवन्त्याशु भक्षितान्यखिलान्यपि ।
वस्तूनि स क्षुधारूपो व्याधिर्भस्मक उच्यते ॥ ५२ ॥
कफोत्तरा रक्तचलाश्रिता मलाः पादेष्वधःकायमुपाश्रिताः शनैः ।
कुर्वन्ति शोफं घनमाहुश्लीपदं तत्कर्णनासादिषु पादवद्भवेत् ॥ ५३ ॥
ताम्रचूर्णसमं सूतं शुद्धं मर्द्यं दिनत्रयम् ।
नागवल्लीमेघनादपाठापौनर्नवद्रवैः ॥ ५४ ॥
गोमूत्रे मर्दयेद्गाढं चक्रयन्त्रे दिनं पचेत् ।
माषैकं भक्षयेत्क्षौद्रैः श्लीपदी च पिबेदनु ॥ ५५ ॥
खादिरं शल्लकीकाष्ठं क्षौद्रं चाशनकाष्ठकम् ।
गवां मूत्रैः समं पिष्ट्वा पिबेच्छ्लीपदनाशनम् ॥ ५६ ॥
गुडूचीकटुकाशुण्ठीदेवदारुविडङ्गकम् ।
पिष्ट्वा गोमूत्रसंयुक्तो लेपः श्लीपदनाशनः ॥ ५७ ॥
ब्राह्मीपलाशयोः क्वाथे रीतिपत्रं विनिक्षिपेत् ।
दिनद्वयं ततस्तानि वपुस्तेनैव घर्षयेत् ॥ ५८ ॥
लघुभाण्डे समादाय चूर्णं कूष्माण्डवारिणा ।
महत्त्रिवारं कुर्वीत पुटं करभवारिणा ॥ ५९ ॥
मर्दयित्वा पुटं दद्यादजामूत्रेण भावयेत् ।
ततोऽप्येकं पुटं दत्त्वा तिस्रस्त्रिकटुभावनाः ॥ ६० ॥
अमर्यजाविडङ्गाग्निगोजन्मैरथ भावितः ।
प्रतिमेषः सुसंसिद्धो रसो वल्मीकमृद्रसैः ॥ ६१ ॥
वल्लत्रयमितो देयो वल्मीके तस्य मृत्स्नया ।
वल्मीकिं संविलिप्यैतत्क्रिमिसंघमशान्तये ॥ ६२ ॥

---

१ कुरबस्य क°। (साधीयान्)। २ ज. °दलं°। ३ घ तत्काद्रेन। ४ घ. जीर्णे। ५ घ. कन्यो-त°। ६ ग. °प्रणं°। घ. °प्रजर्नं स°। ७ घ. मापैकं। ८ घ °क टेहस्येवादि क्षौ°। ९ ङ.° त्रि गुणले°। १० घ. °हानि गो°। ११ ग °सो इद्धिक°।

रसैरुत्तरवारुण्याः सभ्रमं हन्ति मारुतम् ।
वासानीरानुपानेन जयेत्कफसमीरणम् ॥ ६३ ॥
विडङ्गं नागरं क्षारं काललोहरजो मधु ।
यवामलकचूर्णं च योगोऽतिस्थौल्यदोषजित् ॥ ६४ ॥
वरासेनाम्रपः पत्रैर्निशाकार्थं मधुप्लुतम् ।
द्विरदस्थूलदेहोऽपि पिबेन्मासात्कृशो भवेत् ॥ ६५ ॥
विपरीते रते प्राप्ते लिङ्गे दाहः प्रजायते ।
कार्श्यं च सर्वगात्रेषु तत्प्रतीकार उच्यते ॥ ६६ ॥
प्रलेपग्रस्तमिवध्यैव लिङ्गे चोषणमाचरेत् ।
क्षणे त्वेतस्य संजाते क्षालयेच्छीतलाम्बुना ॥ ६७ ॥
कोलनिर्यासमादाय पाययेत्तं सशर्करम् ।
शाल्मलीद्रवयोर्मूलीरसपायसमाशयेत् ॥ ६८ ॥
पुरुषव्याधिनुत्त्यर्थं रक्तस्रावो हि पृष्ठके ।
भक्षणं बोलबद्धस्य मत्स्याक्षीमूललेपनम् ॥ ६९ ॥
जानुरुग्ग्रन्थिनुत्त्यर्थं यवपिष्टाः प्रलेपयेत् ।
सामुद्रकाञ्जिकाभ्यां हि लेपं विधेहि सत्वरम् ॥ ७० ॥
सर्वरक्तविकारेषु बोलबद्धस्य सेवनम् ।
मेषीक्षीरं द्रवं चूर्णं कटुतुम्बे विनिक्षिपेत् ॥ ७१ ॥
प्रलेपनेन सातत्यादस्थिभङ्गः प्रशाम्यति ।
क्षातुकस्यापनुत्त्यर्थं मग्नपर्शाग्निवेशनम् ॥ ७२ ॥
दैवेनातिरते स्त्रीणां विषमोत्कटगमनात् ।
जायन्ते व्यापदो योनौ दुष्टबीजात्तथात्मतः ॥ ७३ ॥
पिष्टीतारार्कयोरेवा तैले गन्धस्य पाचिता ।
सेविता मधुसर्पिर्भ्यां गुह्यरोगान्नियच्छति ॥ ७४ ॥
निम्बुद्रावैः सुसंपिष्टं निम्बैरण्डस्य बीजकम् ।
योनिशूलहरं क्षिप्तं गोलकं योनिमध्यगम् ॥ ७५ ॥
सोमराजीदेवदारुनिम्बदारुनिशामनम् ।
तक्रपिष्टं प्रलेपोऽयं योन्यामयहरो भवेत् ॥ ७६ ॥

१ [illegible] । २ [illegible] । ३ [illegible] । ४ [illegible] । ५ [illegible] । ६ [illegible] । ७ [illegible] । ८ [illegible] । ९ [illegible] । १० [illegible] । ११ [illegible] । १२ [illegible] । १३ [illegible] । १४ [illegible] । १५ [illegible] ।

लशुनं गृहधूमं तु विशाला सविडङ्गकम् ।
कण्टकारीफलं तोयैः पिष्ट्वा योनौ प्रलेपयेत् ॥ ७७ ॥
कृमिशूलहरं ख्यातं सप्ताहान्नात्र संशयः ।
मञ्जिष्ठा तगरं कुष्ठं त्रिफला शर्करा वचा ॥ ७८ ॥
[1]मेदा यष्टी हरिद्रे द्वे दीप्यकं कटुरोहिणी ।
पयस्या हिङ्गु काकोली वाजिगन्धा शतावरी ॥ ७९ ॥
प्रत्येकं चूर्णयेत्कर्षं द्वात्रिंशत्पलकं घृतम् ।
घृताच्चतुर्गुणं क्षीरं घृतशेषं विपाचयेत् ॥ ८० ॥
योनिशूले शुक्रदोषे गर्भिणीनां च पाययेत् ।
त्रियोनिरसगुञ्जैकं त्रिनिष्कमभयागुडम् ॥ ८१ ॥
पुष्परोधहरं खादेत्पलैकं तिलजीवनम् ।
ततः शीतोदकं क्षिप्त्वा पुष्पं स्रवति तत्क्षणात् ॥ ८२ ॥
लाङ्गलीकन्दचूर्णं वा मूलं वाऽप्यापमार्गजम् ।
इन्द्रवारुणिमूलं वा योनिस्थं पुष्परोधनुत् ॥ ८३ ॥
तिलमूलकषायं तु ब्रह्मदण्डीयमूलकम् ।
षष्टीत्रिकटुकं चूर्णं क्वाथयुक्तं च पाययेत् ॥ ८४ ॥
पुष्परोधे रक्तगुल्मे स्त्रीणां सद्यः प्रशस्यते ॥ ८५ ॥
[2]चणकानां रसं चैव श्रृतं क्षीरं घृतेन वा ।
शर्करामधुसंयुक्तं रक्तदोषहरं पिबेत् ॥ ८६ ॥
[3]तिलक्वाथो गुडं व्योषं तिलभाङ्गीयुतं पिबेत् ।
क्वाथं रक्तभवे गुल्मे नष्टपुष्पेऽथ पाययेत् ॥ ८७ ॥
ग्राह्यं कृष्णचतुर्दश्यां धत्तूरस्य तु मूलकम् ।
कटीं बध्वा रमेत्स्वेच्छं न गर्भः संभवेत्कचित् ॥ ८८ ॥
[4]मुक्ते न लभते गर्भं पुरा नागार्जुनोदितम् ।
तन्मूलचूर्णं योनिस्थं न गर्भः संभवेत्कचित् ॥ ८९ ॥
मृतो जाते क्षिपेद्योनौ तिलतैलार्कसैन्धवम् ।
द्रवते तत्क्षणादेव तच्छुक्रं पुष्पितामपि ॥ ९० ॥
देवालये तु तच्चूर्णं कर्षैकं तोयपेषितम् ।
पिबेद्गर्भवती नारी गर्भः स्रवति तत्क्षणात् ॥ ९१ ॥

---

१ घ. योनि । २ घ. यत्रा ॥ ७७ ॥ ३ घ. गोदा । ४ घ. °रोगह° । ५ घ. °र्भे च समूल वाप° । ६ ट. °निस्थपु° । ७ घ. गुडव्यो° । ८ घ. व्योम । ९ घ. नष्टे पुष्पे च पा° । १० घ. रमेत्स्वस्थं । ११ घ. द्रवेत । ज. द्रवेत्सतत्क्ष° । १२ घ. यचूर्णं ।

काण्डमेरण्डपत्रस्य योनावष्टाङ्गुलं क्षिपेत् ।
चतुर्मासोद्भवो गर्भः स्रवत्येव हि तत्क्षणात् ॥ ९२ ॥
निर्गुण्डीद्रवसंपिष्टं चित्रमूलं मधुप्लुतम् ।
कर्षं भुक्त्वा पतत्याशु गर्भो रण्डाकुक्षोद्भवः ॥ ९३ ॥
मूलं तु शरपुङ्खायास्तन्दुलाम्बुप्रपेषितम् ।
पाययेत्कर्षमात्रं तदतिरक्तप्रशान्तये ॥ ९४ ॥
स्त्रीणां रक्ते पूयके वा प्रवृत्ते सैसं चूर्णं पेटकारीभवं च ।
दद्यात्प्रातर्मल्लखण्डेन सार्धं दत्वा सूतं त्वर्कमूर्तिं घृतेन ॥ ९५ ॥
योनौ शूले निम्बवातारिपिष्टिं कुर्याच्चह्ना नागकर्णोत्थमूलैः ।
तैलं कार्यं व्योपयष्टिप्रयुक्तं दद्यात्स्त्रीणां रक्तदोषापनुत्त्यै ॥ ९६ ॥
पाठा जम्ब्वाम्रयोरस्थि शिलोद्भेदं रसाञ्जनम् ।
अम्बष्ठाशाल्मलीं पिष्ट्वा समङ्गावत्सकत्वचम् ॥ ९७ ॥
वाह्लीकविल्वातिविषालोध्रतोयदगैरिकम् ।
शुण्ठीमधुकमार्द्वीकं रक्तचन्दनकट्फलम् ॥ ९८ ॥
कट्वङ्गवत्सकानन्ताधातकीमधुकाञ्जनम् ।
पुष्ये गृहीत्वा संचूर्ण्य सक्षौद्रं तन्दुलाम्बुना ॥ ९९ ॥
पिबेदर्शःस्वतीसारे रक्तं येचोपवेशयेत् ।
दोषा गन्तुकृता ये च बालानां तांश्च नाशयेत् ॥ १०० ॥
योनिदोषं रजोदोषं श्यावं श्वेतारुणं विषम् ।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ॥ १०१ ॥
पत्रकन्दमूलादिषु जायते ततो विषाद्विषं स्थावरमुग्रवीर्यम् ।
सर्पादिकं जङ्गममुच्यतेतद्द्वैरनेकैः कृतकं च यत्तत् ॥ १०२ ॥
घननादजटा हन्ति विषं स्थावरजङ्गमम् ।
ज्येष्ठाम्बुसूतराजेन पीता भीरुशिफा तथा ॥ १०३ ॥
सुरभिशक्रद्रसभावितशशिराजीचूर्णसंयुतः सूतः ।
स्थावरजङ्गमकृत्रिमविषजिद्गुञ्जामितोऽभ्यस्तः ॥ १०४ ॥
अभ्रकं तालकं ताप्यं शिलाजित्तुनटीरसः ।
देवदालीरसो व्योपं लेपनाद्विषनाशनम् ॥ १०५ ॥

---

१ घ. °तिरिक्त°। २ घ. °मूर्तिपूं°। ३ ट. शिलाभेदर°। ४ घ. शुण्ठीमधूकमृद्वीका र°। ५ घ य. व्योप°। ६ घ. श्यावश्वेतारुणाशितम् । ७ घ पुष्यानु°। ८ घ. °नागन°। ९ घ °तशिशिराजीर्ण°।१० ग. °रसं व्यो°। घ. °रसव्यो°। ११ घ. °घनादानः ॥ १०४ ॥

रसेन चक्रमर्दस्य पुटितः पुटपाचितः ।
एरण्डस्नेहसंयुक्तः सूतोऽर्लुताविकारजित् ॥ १०६ ॥
जलेन नागदमनीमूलं नस्ये प्रयोजितम् ।
महासर्पस्य विषमं विषं नश्यति तत्क्षणात् ॥ १०७ ॥
जलपिष्टं शिरीषस्य पञ्चाङ्गं यः पिबेन्नरः ।
स नागराजदष्टोऽपि मानुषो निर्विषो भवेत् ॥ १०८ ॥
अश्वगन्धाभवं कन्दं वन्ध्यां वाऽप्यथ यः पिबेत् ।
तस्य देहान्तरं याति विषं स्थावरजङ्गमम् ॥ १०९ ॥

व्योपैरण्डस्नावपक्वं तु तैलं लेपायोक्तं वृश्चिकानां सदैव ।
सूतं गन्धं टङ्कणं हेमयुक्तं घर्षेद्यामं मेघनादीरसेन ॥ ११० ॥
गोलं कृत्वा कान्तपाषाणमूषा मध्येक्षिप्त्वा भूधरे तं पुटेत ।
पश्चाद्घर्षेन्मेघनादीरसेन सूतः सिद्धस्त्वेष तार्क्ष्यो विषारिः ॥ १११ ॥
तार्क्ष्यं वन्ध्या भक्षयेद्भक्तिमानंसूत तस्माद्यान्ति नाशं विषाणि ॥११२॥

सैसिन्दुवारतगरं मृतं संजीवनं विषम् ।
शिरीषकुसुमं पत्रं विषमास्तुविषापहम् ॥ ११३ ॥
देवदारु नतं मांसी द्रांमिली वाकुची विषम् ।
कुष्ठं च पानलेपाभ्यां समस्तविषनाशनम् ॥ ११४ ॥
सर्पादिविषनाशाय टङ्कणस्य रजोऽम्भसा ।
पानाभ्यञ्जननस्यायैरतिगुह्योपदंशिना ॥ ११५ ॥
मनोह्वा सैन्धवं हिङ्गु मालतीपल्लवानि च ।
गोशकृद्रसपिष्टानि गुलिका वृश्चिकापहा ॥ ११६ ॥
अर्कपयसा दिवा आह्वतरोर्भावितैर्मुहुर्बीजैः ।
गुलिका कृता प्रयत्नाद्वृश्चिकविषमाशु नाशयति ॥ ११७ ॥

कनकसारसुतीक्ष्णनिदिग्धिका हयुपासिद्धकलांशनिषेवणात् ।
जयति साधु युवाधनकाङ्क्षया गणिकया परिदत्तगरौषधम् ॥ ११८ ॥

पुराणवृक्षाम्लयुतं कटुत्रयं नरेण भुक्तं त्वशनावसाने ।
असारवृत्ताबलयाऽर्थकाङ्क्षया सहान्नदत्तं विषमाशु नाशयेत् ॥११९॥३२७४॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये क्षुद्ररोगगुह्यरोगस्थावरजङ्गमविषप्रतीकारो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

१ घ. °तो भूताविकारनुत् । २ च °गदवल्लीं° । ३ ग पचेत । ४ घ. वन्ध्यां । ५ ज सिन्दुवार च टगर मृतम° । ६ घ त्वक्ती । ७ घ. रजो भजेत् । ८ ग. °मा मद्य । ९ घ °पुरमि° । १० घ. °वृक्षाम्बु यु° ।

## अथ षड्विंशोऽध्यायः ।

### [ अथ जरारोगचिकित्सनम् । ]

दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ।
प्रभावर्णस्वरौदार्यं देहेन्द्रियबलोदयम् ॥ १ ॥
वाक्सिद्धिं वृषतां कान्तिमवाप्नोति रसायनात् ।
पन्थाः शीतं कदन्नं च वयोवृद्धाश्च योषितः ॥ २ ॥
मनसः प्रातिकूल्यं च जरायाः पञ्चहेतवः ।
हलिनीरससंपिष्टौ तुल्यांशौ रसगन्धकौ ॥ ३ ॥
हस्तिपर्णीलवलिकामत्स्याक्षीकल्कवेष्टितौ ।
त्रिः पक्वौ मूकमूषायां सव्योषौ वार्धकापहौ ॥ ४ ॥
आवर्तितरसपलं क्षिप्त्वा द्विपलगन्धके ।
आर्द्रकद्रवमुष्टीनां विंशत्या मर्दितं पचेत् ॥ ५ ॥
मृद्रूढताम्रमूषायां तं गुञ्जाप्रमितं रसम् ।
ससर्पिर्नागरं भुक्त्वा तप्ताम्बुप्रसृतं पिबेत् ॥ ६ ॥
रसोऽयमुदयादित्यः स्याज्जराजरजनीहरः ।
मूषां तिन्दुकविस्तारामायामे षोडशाङ्गुलाम् ॥ ७ ॥
भाण्डपादस्थपादांशं वालुकाभिः परिक्षिपेत् ।
तस्यां निवेश्य द्विगुणं गन्धगर्भगतं रसम् ॥ ८ ॥
यामैमात्रं पचेच्चुल्ल्यां क्षिपेद्गन्धस्य तद्रमे ।
वायसीनागिनीमत्तमेघनादरसं क्रमात् ॥ ९ ॥
स रसः सर्वरोगघ्नो वलीपलितजिद्भवेत् ।
रसगन्धकमध्वाज्यशिलाजत्वम्लवेतसम् ॥ १० ॥
*द्विमाषप्रमितं वेगान्मासमात्राज्जरां जयेत् ।*
विष्णुक्रान्तारुणागस्तिक्षीरिणीतन्दुलीयकैः ॥ ११ ॥
रसगन्धकयोः पिष्टी स्त्रीस्तन्येन च मर्दिता ।
यवास्तिलाघृतक्षौद्रमेषामुद्वर्तनं जयेत् ॥
कार्श्यं जरां च षण्मासाद्विधत्ते वृद्धिमायुषः ॥ १२ ॥

---

१ घ. °तिते र° । २ घ. °सृति । ३ घ. भाण्डपादस्थपादांशो वा° । ४ घ. प्रपूरयेत् । ५ घ. °गुणग° । ६ घ. °मत्र प° । ७ घ. °जित्यस्म् ।

शिलाजतुक्षौद्रविडङ्गसर्पिर्लोहाभयापारदताप्यभक्षः ।
आपूर्यते दुर्बलदेहधातुस्त्रिपञ्चरात्रेण यथा शशाङ्कः ॥ १३ ॥
हेम धात्रीफलं क्षौद्रं गोन्वितं रसमर्दितम् ।
लिहन्नतु पिवेत्क्षीरं दृष्टरिष्टोऽपि जीवति ॥ १४ ॥
मधुमागधिकाविडङ्गसारत्रिफलाहेमघृतं सितां च खादन् ।
जरयानवलीढदेहकान्तिः समधातुश्च समाः शतं च जीवेत्॥१५॥
ज्योतिष्मतीनामलता पीता पीतफलोज्ज्वला ।
आषाढे पूर्वपक्षे स्याद्गृहीत्वा बीजमुत्तमम् ॥ १६ ॥
आहरेत्तिलवत्तैलं मुष्टिना चापि तत्त्यजेत् ।
क्षीरतुल्यं चतुर्थांशमाक्षिकं तैलशेषितम् ॥ १७ ॥
ततस्तत्कोलकर्पूरत्वग्जातीफलमिश्रितम् ।
स्निग्धभाण्डगतं धान्येष्वनुगुप्तं निधापयेत् ॥ १८ ॥
पिवेत्सूर्योदये तैलात्पलं याँति विसंज्ञताम् ।
ततः संज्ञां शनैर्लब्ध्वा ततः क्रन्दति रोदिति ॥ १९ ॥
एवं मासे श्रुतिधरः परस्मिन्सूर्यसंनिभः ।
तृतीये पूज्यते देवैश्चतुर्थे नैव दृश्यते ॥ २० ॥
खेचरः पञ्चमे षष्ठे सिद्धैर्मिलति सप्तमे ।
विष्णोः समदिनं जीवेज्जीवन्मुक्तोऽष्टमे भवेत् ॥ २१ ॥
भूमावरत्निमात्रायां ताम्रं तैलेन पूरयेत् ॥ २२ ॥
षण्मासात्पातयेदूर्ध्वं मृदुना तुषवह्निना ।
पीत्वा माषादिनिष्कान्तं तत्रिवर्षान्महाकविः ॥ २३ ॥
तैलप्रस्थं घृतप्रस्थं चतुष्प्रस्थं पयः पचेत् ।
द्विप्रस्थशेषं तत्पीत्वा मासं त्रिपुरुषायुषः ॥ २४ ॥
तैलं पिबेद्घृतक्षौद्रक्षीरान्यतममिश्रितम् ।
कुर्याच्चतैलमध्वाज्यैर्नस्यं क्षीरघृताशिनः ॥
भुक्त्वा शतायुः षण्मासात्सहस्रायुर्भवेन्नरः ॥ २५ ॥
मधुकेन तुंगाक्षीरी पिप्पली क्षौद्रसर्पिषा ।
विडङ्गपिप्पलीभ्यां च त्रिफला लवणेन च ॥ २६ ॥

---

१ ग. °मश्य. । २ घ. गायत्रीरसभावित । ३ ग. °त च निल्यत्वा° । ४ ग. तरपचेत् । ५ ग °र्पीता मा° । ६ ग. स्निग्धभा° । ७ घ यात्विद्विस° । ८ घ. सदा दिने ज्ञाँ° । घ. स्तर्दि° । ९ घ. पिब पून° । १० ग. °ताशनः । ११ च. तु गोक्षीरैः पिप्पल्या क्षौ° ।

संवत्सरप्रयोगेण स्मृतिमेधाबलप्रदा ।
भवत्यायुःप्रदा पुंसां जरारोगनिबर्हणी ॥ २७ ॥
खदिरासनभृङ्गसातलाकृमिशत्रूदकभाविता मुहुः ।
गुडमाक्षिकसर्पिरन्विता त्रिफला हन्ति जरां च वत्सरात् ॥२८॥
त्रिफलामसनोदकेन पिष्ट्वा रजनीपर्युषितामयःकपाले ।
मधुरां मधुना लिहन्निहन्ति स्थविमानं जरसं गदांश्च सर्वान्॥२९॥
कान्ताभ्रकशिलाधातुविषसूतकमाक्षिकम् ।
शीलितं मधुसर्पिर्भ्यां व्याधिवार्धकमृत्युजित् ॥ ३० ॥
गन्धं लोहं भस्म मध्वाज्ययुक्तं सेव्यं पेयं वारिणा त्रैफलेन ।
शुभ्रे केशे कालिमा दिव्यदृष्टिः पुष्टिर्वीर्यं जायते दीर्घमायुः॥३१॥
नीलज्योतिः कान्तचूर्णं रुदन्तीधात्रीपत्रैर्वारिणा त्रैफलेन ।
मध्वाज्याभ्यां वत्सरार्धप्रयोगात्कुष्ठं शुभ्रं रोगजातं निहन्ति ॥३२॥
देहे दार्ढ्यं दिव्यदृष्टिः सुपुष्टिर्वीर्यं शौर्यं जायते दीर्घमायुः॥३३॥
ज्योतिष्मत्यास्तैलमाज्यं सगन्धं गुञ्जावृद्ध्या सेवयेन्मासमात्रम् ।
यावच्च स्याद्यस्तु सः प्राप्यमूर्तिर्मेधायुक्तो दिव्यदृष्टिर्निर्यक्ष्मा॥ ३४ ॥
कान्ताभ्रत्रिफलाविडङ्गरजनीताप्याब्ददेवद्रुम-
व्योषैर्लाङ्गलिपुनर्नवाद्रिगिरिजाङ्कोलैः समं गुग्गुलुम् ।
पिष्ट्वा भृङ्गजलेन सूक्ष्मगुलिकां खादेद्यथासात्म्यतो
मेदःश्लेष्मसमीरणोल्बणगदेष्वन्येषु वा पूरुषः ॥ ३५ ॥
कान्तं तुल्याभ्रसत्त्वं चरणपरिमितं हेमतस्तुल्यमर्कं
वैक्रान्तं ताप्यरूप्यं कृमिहरकटुकैस्तुल्यभागैः समेतम् ।
लीढं देवद्रुतैलैः प्रविशति नृणां देहसिद्धिः समृद्धा
पथ्यं कल्पोक्तमेकं हरति च स कलान्रोगपूगाञ्जवेन ॥३६॥
तदेतत्सर्वरोगघ्नं रम्यं कान्तरसायनम् ।
वृष्यं वृष्यं सुपुत्रीयं माङ्गल्यं दीपनं परम् ॥ ३७ ॥
रात्रौ कान्तशरावके *मुचणका भिन्ना जलैः स्वादुभिः
प्रातर्मुष्टिमिताः खलु प्रतिदिनं षण्मासमासेविताः ।
हन्युः पित्तकफामयान्बहुविधं कुष्ठं प्रमेहांस्तथा
पाण्डुं यक्ष्मगदं च कामलगदं पथ्यं च तक्रं तथा ॥ ३८ ॥

---

* मुचणका इति पाठो मयैव तर्कित. । यतः सर्वेष्वपि पुस्तकेषु किंचिदपि न ज्ञायतेऽत्र ।

---

१ घ. 'पिन् पयःप्रभाते । २ ख. 'धुतान्मधुराल्लि' । ३ घ. 'धंक्यम्' । ४ घ 'त्त मर्त्र विप या' । ५ ज. वृष्य । ६ घ. 'वेन्मासमा' । ७ घ. 'प्याभ्रदे' । ८ घ. 'लामिषु' । ९ घ 'नवाङ्घ्रिगि' । १० घ 'मर्त्रैः' । ११ [illegible] 'एरुवम कृ' । १२ ग 'मास स' । १३ ग. देवेन्द्रतुल्यैर्विचरति नृणां देहसिद्धं समृद्धां प' । १४ घ. 'विचरति । १५ ग. 'सभुक्त । १६ घ मेध्य । १७ घ माङ्गल्यं ।

त्रिफलाघेस्तुसयुक्तं कान्तं सर्वरसायनम् ॥ ३९ ॥
एतत्स्यादपुनर्भवं हि भसितं कान्तस्य दिव्यामृत
सम्यक्सिद्धरसायनं त्रिकटुकीवेल्लाज्यमध्वन्वितम्।
हन्यान्निष्कमितं जरामरणजव्याधींश्च सत्पुत्रद-
मुक्तं श्रीगिरिशेन कालयवनोद्भूत्यै पुरा तत्पितु. ॥ ४० ॥
सिद्धमेभ्रं समं कान्तं मर्दयेदार्द्रवारिणा।
फलांशं हेमचूर्णस्य बीजपूररसे पुनः ॥ ४१ ॥
मर्दयेत्खल्वमध्यस्थं यावत्सप्तदिनावधि।
श्रोंटकर्परसेनैव तथा मुण्डीरसेन च ॥ ४२ ॥
तालमूलीरसेनैव दशमूलीरसेन वा।
तत्तद्रोगहरैः क्वाथैर्भावयेत्सप्तधा भिषक् ॥ ४३ ॥
त्रिफलाव्योपचूर्णं च मध्वाज्याभ्यां प्रयोजयेत्।
पञ्चकर्म विशुद्धेन सेव्यमेतद्रसायनम् ॥ ४४ ॥
पाण्डुशोफोदरानाहग्रहणीशोपकासजित्।
संततं सततं चैव पुराणं विषमं ज्वरम् ॥ ४५ ॥
निहन्यात्सर्वकुष्ठानि प्रमेहान्विंशति जयेत्।
कान्ताभ्रकमिदं श्रेष्ठं रसायनमनुत्तमम् ॥ ४६ ॥
पालाशोलूखले तन्मलयुजिविमर्दोघृतैराढकांशै-
र्मिश्रं ब्राह्मीरसैस्तैर्विधिवदिह पचेत्प्रस्थमात्रं गवाज्यम्।
पाठाधात्रीहरिद्रात्रिवृद्धुपरचितेनापि कल्केन सिद्धं
यो वा वीटारिकृष्णासलवणजटिलाभिर्विलीढः सदा स्यात्।
सौकर्यः सप्तरात्रान्मतिमतिविशदा पक्षतो मासमात्रा-
द्यातुर्यं सत्कवित्वं वरसकलकलाभिज्ञतां मान्नुयात्सः ॥४७॥
ताप्याभ्रकत्रिकटुतुत्थशिलाजकान्तमण्डूरलोहमलटङ्कणसैन्धवं च।
भृङ्गीरसेन वटकांश्च मसूरमात्रा न्सादेद्रसायनवरं सकलामयघ्नम् ॥४८॥
लोहाभ्रौ बलिसूतहाटकपविस्तुल्य कुमारीरसे
पक्वैरण्डदलैर्निबध्य सुदृढं सद्धान्यराशौ त्र्यहम्।
निश्चोद्धृत्य विचूर्णितं मधुवराघृक्तं यथामात्यतः
कृष्णात्रेयविनिर्मितं गदजराविध्वंसि सौख्यप्रदम् ॥ ४९ ॥

---

१ ग. °मधुम। २ घ. °मध्यस°। ३ घ. °देडूर्गा°। ४ घ अट°। ५ ग. °वपत्रैः°। ६ ङ. °त्रिरामै°। ७ ग. °दार्विनञ्ज°। ८ ट. °विपति°। ९ ग. °मात्रन् सा°। १० ध. °ईद्दनी°।

आज्ञासिद्धमिदं रसायनवरं सर्वप्रमेहप्रणु-
स्कासं पञ्चविधं तथैव तनुगं पाण्डुं च हिक्कां व्रणम् ।
श्लेष्माणं पवनं हलीमकमहाशूलं समन्दानलं
कण्डूकुष्ठविसर्पविद्रधिमुखापस्मारगुल्मान्जयेत् ॥ ५० ॥
गोष्पादोऽप्यतरः सुखेन सुलभः सर्वत्र सिद्धो रसो
नाम्नाऽयं कमलाविलासमदतां वैद्यान्यशस्कारकः ॥ ५१ ॥
[ इति लक्ष्मीविलासः ।

अथ लक्ष्मीविलासः—वेदेन्दुनेत्राङ्करसाङ्कभागाभ्रसूतगन्धोपणतिन्दुटङ्का ।
भृङ्गार्द्रगुञ्जाजवनीनवाभिर्भाव्यं त्रिशः स्वेदमदोऽर्कपत्रे ॥
लक्ष्मीविलासः स विशालक्ष्मीं तनौ तनोति क्षपिणः प्रयोगैः ॥ ५२ ॥

अथ नारिकेरपाकः—वाराहीमुसलीकन्दकनकाह्विखररतथा ।
वानरीफलसंयुक्तं चूर्णयित्वा पृथक्पृथक् ॥ ५३ ॥
कार्पासमज्जादुग्धेन उत्कल्प्य यथाक्रमम् ।
भावनासप्तकं दत्वा सूर्यतापे विशोषयेत् ॥ ५४ ॥
नारिकेरं च संभृत्य क्षारं कृत्वा यथाविधि ।
गोदुग्धेन तु तत्कल्पषोडशाद्वयमाश्रतः ॥ ५५ ॥
दर्व्या संवर्तितं भाण्डे यथा दाह्ये न याति च ।
शीतं चूर्णीकृतं पक्वमाज्येन प्रपचेन्नरः ॥ ५६ ॥
जातीफलं लवङ्गं च एलाचूर्णं विनिक्षिपेत् ।
निष्कं शाणमात्रं तु गृहीत्वा भक्षयेत्पयः ॥ ५७ ॥
धातुरोगान्प्रमेहांश्च चलक्षयमधोल्वणान् ।
सप्तरात्रप्रयोगेण प्रशमं यान्ति सर्वतः ॥ ५८ ॥
वृद्धोऽपि तरुणत्वं स प्रहर्षति सदा नरः ।
सोऽमृताख्यं नारिकेलं गुरुणा परिकीर्तितम् ॥ ५९ ॥ ३३३३ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्न-
समुच्चये रसायनविधिर्नाम षड्विंशोऽध्यायः ॥ २६ ॥

---

१ [illegible] २ [illegible] ३ [illegible] ४ [illegible] ५ [illegible] ६ [illegible] ७ [illegible] ८ [illegible] ९ [illegible] १० [illegible] ११ [illegible]

## अथ सप्तविंशोऽध्यायः।

### [ अथ वाजीकरणम्। ]

वाजीकरणमन्विच्छेत्सततं विषयी पुमान्।
पुष्टिस्तुष्टिरपत्यं च गुणवत्तत्र संस्थितम् ॥ १ ॥
वाजीवातिबलो येन यात्यप्रतिहतोऽङ्गनाः।
तद्वाजीकरणं विद्धि देहस्योजस्करं परम् ॥ २ ॥
शुक्रं तु चिन्ताव्यायामव्याधिभिर्देहकर्षणात्।
क्षयं गच्छत्यनशनात्स्त्रीणां चातिनिषेवणात् ॥ ३ ॥
तस्मात्प्रयोगान्वक्ष्यामि दुर्बलानां बलप्रदान्।
सुखोपयोगाद्बालानां भूयश्च बलवर्धनात् ॥ ४ ॥
शुद्धकाये यथाशक्ति वृष्ययोगान्प्रयोजयेत् ॥ ५ ॥
कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम्।
पयोनुपानं यो लिह्यान्नित्यवेगः सदा भवेत् ॥ ६ ॥
कुलीरशृङ्ग्या यः कल्कमालोड्य पयसा पिबेत्।
सिताघृतपयोन्नाशी स नारीषु वृषायते ॥ ७ ॥
स्वयंगुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम्।
धारोष्णेन नरः पीत्वा पयसा रासभायते ॥ ८ ॥
बस्ताण्डसिद्धे पयसि भावितानसकृत्तिलान्।
यः खादेत्ससिताग्गच्छेत्स स्त्रीशतमपूर्ववत् ॥ ९ ॥
गन्धकेन समं सूतं श्वेताङ्कोल्लभवारसैः।
त्रिदिनं मर्दितं तेन रसेन गुटिकीकृतम् ॥ १० ॥
रक्तचित्रकवाराहीपत्रनिर्यासपेषिते।
सद्योहताजमांसस्य पिण्डे न्यस्तं विपाचितम् ॥ ११ ॥
तप्ततैले मज्जयीत यावत्सिन्दूरसंनिभम्।
भक्षयेन्मधुसर्पिर्भ्यां गोक्षीरं च पिबेदनु ॥ १२ ॥
स्त्रियः सेवेत तत्त्यागे यतः स्फुटति लोचनम्।
न क्रामति रसं चास्मिन्क्रान्ते नैव खलु मन्मथः ॥ १३ ॥
मुसलीकदलीकन्दवाजिगन्धाकसेरुकैः।
मर्दितं हेमसूताभ्रं मूषास्थं पुटपाचितम् ॥ १४ ॥

---

१ ग. संस्थिते। २ घ. °नात्॥ ४ ॥ ३ ग. स्त्रिय। ४ ग. स।

शाल्मलीचूर्णसंयुक्तं वासराण्येकविंशतिः ।
भक्षयित्वा चतुर्मापं गव्यं क्षीरं पिबेदनु ॥ १५ ॥
सर्वाङ्गोद्वर्तनं कुर्यात्सपत्रैः शाल्मलीरसैः ।
अन्वहं मधुराहारः सहस्रं रमते स्त्रियः ॥ १६ ॥

**अथ कामदेवः**—हेमपादयुतः सूतो मर्दितः शाल्मलीरसैः ।
कदलीकन्दनिर्यासे क्षीरेक्षुरसगोघृते ॥ १७ ॥
माक्षिके चासकृत्स्विन्नेशाल्मलीक्षीरगोक्षुरैः ।
शर्करामलकद्राक्षामुसलीमाषमाक्षिकैः ॥ १८ ॥
युक्तो रम्भाफलं दत्वा कामदेव इति स्मृतः ।
सेवनादूर्ध्वलिङ्गो वा द्रावयेद्वनिताशतम् ॥ १९ ॥

**अथ मदनसुन्दरः**—गन्धकेन रसः पिष्टः कह्लाररसमर्दितः ।
विपक्वो वालुकायन्त्रे वृष्यो मदनसुन्दरः ॥ २० ॥

**अथ पूर्णचन्द्रः**—कामदेव इह सोऽष्टरसो रक्तपुष्पमुनिसारभावितः ।
पूर्णचन्द्र इति विश्रुतो रसः प्राणिनां चरमधातुपूरकः ॥ २१ ॥
रहस्यं कुसुमास्त्रस्य शृङ्गारस्याधिदैवतम् ।
कार्मणं सुदृशामुक्तं रसत्रयमिदं हरेः ॥ २२ ॥

**अथ मदनमुन्मदरसः**—माषार्धमात्रं हरजं विमर्द्य रसेन मोचरय रसेन तेन ।
त्रिःसप्तसंख्यानि दिनानि गन्धं तत्संमितं गोघृतमध्यपक्वम् ॥२३॥
विभाव्य तेनैव विशोष्य युञ्ज्यात्काचस्थयोनौगलतादलेन ।
तयोर्विमर्द्याथ निपेव्य दुग्धं पिबेत्रिशायां कदलीफलं तत् ॥२४॥
मदनं मदयेन्मदमुज्ज्वलयेत्प्रमदानिवहानतिविह्वलयेत् ।
सुरतैः सुखदैर्गतविच्यवनैर्भवसारजुपामयमेव सुहृत् ॥ २५ ॥

**अथ कुसुमायुधः**—सूतस्य द्विपलं चतुष्पलमितो गन्धो मृतं काञ्चनं
पादन्यूनपलं सुवर्णविमलातार्प्यं रसेनोन्मितम् ।
लौहं कान्तमलस्तथा सितघनं कर्षोन्मितावेकशो
हन्तव्यं दरदेन लोहमखिलं चूर्णं ततो मर्दितम् ॥ २६ ॥
मूषायां विगताकृतौ सिकतया यन्त्रे कृते स्थापये-
द्ब्राह्मीवारि दिनं निषेदि तदनु प्रत्येकमेकान्वहम् ।
वासाकुञ्जरशुण्ठिकात्रिकटुकं मेषी च निर्गुण्डिका
ताम्री कुञ्जरशुण्डिका हुतवहस्तोयानि दत्वा पचेत् ॥२७॥

---

१ क. पुरः । २ स्त्रियः शा° । ३ घ. °रौमांसमा° । ४ क. मासमा° । ५ क. °परहन्या घा° । ६ घ. °लिङ्गः स्त्रदृक्षते° । ७ घ हरिः । ८ क. विमृद । ९ घ. गन्धन° । १० क. नामान्वितं । ११ घ. °पयुक्त° । १२ क. निषवि° । १३ घ. °टीपलं । १४ ट. °र्मतिवि° । १५ घ. सूतः । १६ घ. °तास्या र° । १७ °तं पर्लोन्मि° घ. °तं पर्लोन्मि° । १८ मूषाग । १९ घ. °शुण्डिका° । २० घ. मेनी । २१ घ °शुण्डि° ।

ततेस्तं निखिलाम्भोभिर्विमर्च पुटयेल्लघु ।
निर्यासैः शाल्मलैर्ग्राह्यो वल्लत्रयमितो रसः ।
वलीपलितनाशाय त्रिवारं मधुराशनः ॥ २८ ॥
सुरतेषु सुलोचनाशतैर्गतवीर्यंच्यवनैर्मनो यदि ।
तदमुं रसमाश्रयाश्रयं कुसुमास्त्रस्य चिराय धन्विनः ॥ २९ ॥
यदि सन्ति सहस्रशः स्त्रियश्चतुराश्लेषमनोहराः प्रसन्नाः ।
सुकवेरिव गुम्फना गिरां सुरसोऽनेन युवा रसेन भूयात् ॥ ३० ॥

अथ सूतेन्द्रः—मुक्ताफलं प्रवालं च सुवर्णं रौप्यमेव च ।
रसगन्धकतः सर्वं तोलैकैकं प्रकल्पयेत् ॥ ३१ ॥
रक्तोत्पलैः पत्ररसैर्मर्दयेत्तत्तलीकृते ।
मर्दयेत्तत्पुनर्दत्त्वा गन्धं माषचतुष्टयम् ॥ ३२ ॥
तन्मध्ये गन्धकं दत्त्वा मर्दयेत्तदनन्तरम् ।
भीक्ष्या काचघटी मध्ये संनिरुध्य प्रयत्नतः ॥ ३३ ॥
वालुकायन्त्रमध्यस्थां कृत्वा काचघटीं ततः ।
पाकस्तत्र तथा कार्यो भवेद्यामत्रयं यथा ॥ ३४ ॥
काचपात्रे समाकर्षेत्सिद्धं सूतं ततः परम् ।
भक्षयेद्रक्तिकाः पञ्च रोगैराक्रान्तपुद्गलः ॥ ३५ ॥
भोजनं पूर्वरोगोक्तं यत्नतः कारयेद्भिषक् ।
दुर्बलं वपुरत्यर्थं बलयुक्तं करोत्यसौ ॥ ३६ ॥
शुक्रवृद्धिं करोत्येष ध्वजभङ्गं च नाशयेत् ।
मासेनैकेन सूतेन्द्रो रोगनाशाय कल्पते ॥ ३७ ॥
शालयो मुद्गयुक्ताश्च गोधूमा भोजने हिताः ।
घृतं गव्यं तथा क्षीरं स्निग्धं पथ्यं प्रयोजयेत् ॥
पारापतस्य मांसं च तित्तिरेर्लावकस्य च ॥ ३८ ॥

शुद्धं सूतं वाजिगन्धां च यष्टीं पक्त्वा दुग्धं तच्च कार्ष्यं दद्रीत ।
एवं चौप्यं वापयित्वा च दद्याद्द्वा यष्टिं मागधीं वाजिगन्धाम् ॥३९॥
मध्वाज्याभ्यां शाल्मलीसत्त्वयुक्तां शम्बूकैर्वा भर्जितैर्वाप्यभिश्रैः॥ ४० ॥

---

१ घ. °तस्ताभिर्वि° । २ घ.ट. °र्गतिवी° । ३ घ. °बने घ्नो° । ४ ग [illegible] । ५ ङ. °[illegible]र्वं । ६ ङ. °पेत्तस्मा[illegible]हतद् । ७ ङ. तथा । ८ ङ. °[illegible] । ९ ङ. °[illegible] घ । १० ङ. [illegible] ।

**अथ मदनकामदेवः**—गोलं गन्धकसूतयोस्त्रिकटुककाथेन बध्वाऽथ भू-
कूष्माण्डान्तरवस्थितं विपिहितं तेनैव लिप्त्वोपरि ।
मापैर्द्व्यङ्गुलमाज्यपक्वमथ तत्कूष्माण्डमध्याद्धरे-
त्तच्चूर्णेन च संमिते सुरक्तताचूर्णस्य मुष्टिद्वयम् ॥ ४१ ॥
जयाशतावरीकृष्णा कपिकच्छूफलं तिलाः ।
प्रत्येकं पलसंमाना यवाः पञ्चपलोन्मिताः ॥ ४२ ॥
तावन्मोचफलं द्वौ च यष्टी मुष्टिद्वयं शुभा ।
निक्षिप्य सप्त सप्तात्र भावनाः क्रमशश्चरेत् ॥ ४३ ॥
महाबलाबलानागबलाभिर्द्राक्षयाऽपि च ।
कृष्णाधात्रीक्षुभिश्चापि दन्तपात्रे निवेश्य च ॥ ४४ ॥
मत्स्यण्डिकायुतं वल्लद्वयमानं भजेन्निशि ।
अनुपानमिह प्रोक्तं धारोष्णं सुरभेः पयः ॥ ४५ ॥
दोषमार्तवजं हत्वा कुर्याद्वीर्यमेवर्धनम् ।
ध्वजोत्साहं तथा स्त्रीषु वाजीकरणमुत्तमम् ॥ ४६ ॥
अलं मलयवायुना कुमुदबान्धवेनाप्यलं
मधुव्रततसत्वायिमेकलितपञ्चमाः केपिकाः ।
इमं भज विशङ्कितं रतिसरोजिनी भास्करं
मनोजपरिदैवतं मदनकामदेवं रसम् ॥ ४७ ॥

**अथ कामधेनुः**—हेमाभ्रसत्त्वकान्तार्काः प्रत्येकं पलमात्रकाः ।
एकत्र द्राविताः सर्वे कर्षभूनागसत्त्वकाः ॥ ४८ ॥
पलविंशतिसूतेन तैश्च [1]पिष्टिं प्रकल्पयेत् ।
शतधा पातयेत्सूतं [2]पिष्टीं कृत्वा पुनश्च तैः ॥ ४९ ॥
शिष्टं द्विपलिकं सूतं संन्यासाद्भस्मतां नयेत् ।
भस्मीभूते रसे तस्मिञ्शिष्टे [3]चैव पले ततः ॥ ५० ॥
वज्रं निष्कमितं चाभ्रसत्त्वं षट्पलिकं क्षिपेत् ।
द्विपलं गन्धकं शुद्धं द्विदिनं मर्दयेत्ततः ॥ ५१ ॥
तत्सर्वं लोहजे पात्रे क्षिप्त्वा च मृदुवह्निना ।
शाल्मलीमूलजं क्वाथं चत्वारिंशत्पलोन्मितम् ॥ ५२ ॥

---

१ क. °र्णे त्वमं । २ क. °कं फल° । ३ क. °प्रसाधन° । ४ ङ. °धुव्रतमधारि मे° । ५ ङ. भजो । ६ क. पिट । ७ क. पिष्टि । ८ क. चैतप° ।

जारयेद्रसराजस्य दत्वा दत्वाऽल्पमल्पकम् ।
स्वाङ्गशीतं रसं कृत्वा सुगाढं परिमर्दयेत् ॥ ९३ ॥
नीलिपातेन तत्क्वाथं रजोदग्धं प्रदापयेत् ।
ततः करण्डके क्षिप्त्वा यत्नेन स्थापयेत्खलु ॥ ९४ ॥
सोऽयं गुञ्जामितघृतयुतः सेवितो हन्ति रोगां-
स्तत्तद्दोषप्रभवकुटिलान्दुःखसाध्यान्समस्तान् ।
दद्याद्दीप्तिं जठरशिखिनं स्त्रीशतं सेव्य शृण्य-
स्थैर्यं कुर्यादपि च वपुषो नामतः कामधेनुः ॥ ९५ ॥

**अथोमापतिः**—कृष्णाभ्रकस्य धान्याभ्रं कृत्वा भृङ्गाम्बु निक्षिपेत् ।
तस्मिंश्च तुल्यकं देयं सूक्ष्मं ताप्यभवं रजः ॥ ९६ ॥
टङ्कणं चाग्निना भृष्टं तावदेव विनिक्षिपेत् ।
छागास्थिसंभवं चूर्णं चतुर्थांशेन निक्षिपेत् ॥ ९७ ॥
रसभस्माष्टमांशं च गुडगुञ्जागुरुस्तथा ।
पञ्चाज्येन विनिष्पिष्य गोलीकृत्य विशोष्य च ॥ ९८ ॥
ततो नूतनभाण्डस्य जलघृष्टेन पाण्डुना ।
विलिप्य वटिकाः सर्वा हरेत्सर्वं पुरोक्तवत् ॥ ९९ ॥
महाभ्रसत्त्वमेतत्स्यादेकमप्यरिलातिंनुत् ।
त्रिफलाक्वथितैः सार्धं पुटितश्च शतावधि ॥ ६० ॥
इत्थं महाभ्रसत्त्वं तन्मृतं शाणचतुष्टयम् ।
एकपाणमितं सम्यग्रसराजस्य भस्म च ॥ ६१ ॥
एकशाणमितं गन्धं त्रिफला च त्रिशाणिका ।
कान्तपात्रे क्षिपेदेतत्सर्वं घृतसितायुतम् ॥ ६२ ॥
मर्दयेदतियत्नेन यावत्स्यात्प्रहराष्टकम् ।
तत्कल्कं निक्षिपेत्कान्तलोहजातकरण्डके ॥ ६३ ॥
संसिद्धोऽयमुमापतिर्वररसो गुञ्जामितः सेवितो
मासेनैव महामयान्प्रशमयेत्पथ्यादियुक्तिं विना ।
नित्यं क्षीरघृताशनेन च पुनः संसेवितो नाशये-
दब्देनैव जरां वलीपलितकैर्दयाच्छताब्दं वयः ॥ ६४ ॥
उमापती रसः सोऽपयुमापतिरिवापरः ॥ ६५ ॥

---

१ क. हन्ता । २ क. नान्नी° । ३ ग °स्तागर° । ४ घ. °गिताः ग्रा° । ५ घ. हन्तः रधं° । ६ क. पञ्चाजेन । ७ घ. तत्पु । ८ क. °कलाग° । ९ न. गुरु रि° ।

**अथ महाकनकसुन्दरः**—कान्तकाञ्चनगन्धाश्ममारितं जारितं रसम्।
चतुर्निष्कमितं चाथ स्वर्णं निष्कमिदं मृतम्॥ ६६॥
निक्षिप्य कान्तपात्रे तु पञ्चाशन्निष्कसंमितम्।
जारयेद्गन्धकं शुद्धं गन्धेन वडवाग्निना॥ ६७॥
निष्कतुल्यमिदं चूर्णं श्लक्ष्णीकृत्य प्रयत्नतः।
निक्षिपेन्मधुसंपूर्णे घृतसुस्निग्धभाण्डके॥ ६८॥
अमुनैव प्रकारेण पथ्यानां षष्टिसंयुतम्।
त्रिशतं साधयेद्यत्नाच्छास्त्रदृष्टविधानतः॥ ६९॥
त्रिधा विभज्य तत्रैकां समादाय हरीतकीम्।
एकपादं दिनाभ्यां च द्वितीयं दिवसैस्त्रिभिः॥ ७०॥
तृतीयं च ततः पादं चतुर्भिर्दिवसैर्भजेत्।
एकैकां च ततः पथ्यां भजेदावत्सरं नरः॥ ७१॥
जीवेद्वर्षशतं साग्रं वलीपलितवर्जितः।
सर्वव्याधिविनिर्मुक्तो नित्यं स्त्रीशतसेवितः॥ ७२॥
बलवान्वीर्यवांश्चैव पूर्णसर्वेन्द्रियोदयः।
जायते नात्र सन्देह आज्ञेयं पारमेश्वरी॥ ७३॥
हन्यादक्षिगदांश्च कुष्ठमखिलं मासान्तमासेवितः
पाण्डुं च ग्रहणीं प्रमेहगुदजान्गुल्मांश्च शूलामयान्।
स्थूलत्वं च तथा महाग्निसदनं रोगांस्तथैवापरा-
न्कुर्यादीपनपाचनं खलु नृणां भाव्यामयारोधनम्॥ ७४॥
अयं रसायनो दिव्यो महान्कनकसुन्दरः॥ ७५॥

**अथामृतार्णवः**—कृत्वा कण्टकवेध्यानि पंलस्वर्णदलान्यथ।
अष्टांशरसलिप्तानि निक्षिपेदुपले न्यहम्॥ ७६॥
हिङ्गुहिङ्गुलगन्धाश्मताप्यनीलाञ्जनैः शनैः।
कृतं चूर्णमधश्चोर्ध्वं पत्राणां विनिधाय च॥ ७७॥
शतवारं पुटेत्सम्यङ्निरुत्थं भस्म जायते।
तद्भस्मद्विगुणं सूतं तस्माद्द्विगुणहिङ्गुलः॥ ७८॥
तस्माच्च द्विगुणं ताप्यं सर्वमेकत्र मर्दयेत्।
रसेन मातुलुङ्गस्य निरन्तरदिनद्वयम्॥ ७९॥

१ ग. मतम्। २ क. शुद्धमन्धे°। ३ घ. मन्धने। ४ क. °मित भू°। ५ घ. °पेत्पूतम°। ६ घ. वा। ७ घ. °सेवकः। ८ घ. पूर्णः स°। ९ घ. °हारक°। १० घ. पट्टस°। ११ ग. °द्दत्तपू°। १२ घ. त्रिगुण।

तुषैः पुटत्रयं दद्याद्गोकरीषैः पुटत्रयम् ।
पुटानि दश विंशत्या छगणानां प्रकल्पयेत् ॥ ८० ॥
त्रिंशद्भिश्छगणैर्दद्यात्पुटानामथ विंशतिम् ।
तस्मिन्वैक्रान्तजं भस्म क्षिपेत्तत्पादमात्रया ॥ ८१ ॥
सर्वमेकत्र संचूर्ण्य भृङ्गराजनिजद्रवैः ।
भावयेत्सप्तवाराणि सिध्यत्येवममं रसः ॥
श्रीमता नन्दिना प्रोक्तो रसोऽयममृतार्णवः ॥ ८२ ॥
गुञ्जाबीजमितः सिताघृतकणासंयोजितः सेवितः
कुर्याद्वृष्यमनेकशो वरवधूसंतोषसंपोषणः ।
यक्ष्मव्याधिविधूननो गरहरः पर्याप्तदीप्तानलो
मूलव्याधिनिवारणः किमपरं सर्वामयध्वंसनः ॥ ८३ ॥
रम्भापक्वफलं घृतं दधि पयः क्षैरेयकं मण्डका
बालं तालफलं सिता च पललं संतानिका मोदकाः ।
खर्जूरं वरपानकं च वटकाः पुण्ड्रेक्षवः सारसं
गुर्वन्नं पनसं तथा शिखरिणी पथ्यं रसेऽस्मिन्मतम् ॥ ८४ ॥

**अथ मदनसंजीवनः**—त्रिपलं पारदं शुद्धं गन्धकं च चतुष्पलम् ।
मृतमभ्रकसत्त्वं च स्वर्णकान्तं च कार्षिकम् ॥ ८५ ॥
द्विपलं हेमविमलं भूनागायाः पलत्रयम् ।
एभिः सर्वैश्च संपेष्य प्रकुर्यात्कष्टपिष्टिकाम् ॥ ८६ ॥
वालुकापत्रविन्यस्तलोहपात्रे क्षिपेत्तदा ।
अधस्ताज्ज्वालयेदग्निं कारयेत्तदनन्तरम् ॥ ८७ ॥
मण्डूकं ब्राह्मिकायाश्च मुसलयाश्चित्रकस्य च ।
हस्तिशुण्ड्यास्तथा कृष्णनिर्गुण्ड्या गोक्षुरस्य च ।
रसं कुडवमानेन क्षिपेत्खल्वे मुहुर्मुहुः ॥ ८८ ॥
तत आकृष्य संपिष्य मधुना सह यत्नतः ।
मह्णमूषोदरे क्षिप्त्वा विनिरुध्य विशोष्य च ॥ ८९ ॥
दशभिश्छगणैर्देयं पुटं संपूज्य भैरवम् ।
करण्डे क्षेपयेत्पिष्टा समभ्यर्चितकन्यकः ॥ ९० ॥

---

१ घ. °नामेशाशि°। २ घ. °धौद्रराम°। ३ घ. °वधूः म°। ४ घ. °संतोष°। ५ ग. स्तर्न या°। ६ ग °न्धरर लो°। ७ ग. मण्डरा ब्रा । घ. मण्डूकब्रा°। ट. मण्डवत्रा°। ८ घ. हृस्तगोरे°। ९ घ. °रतलं गु°। १० घ. °न्दरा ॥ ८९ ॥

रसः ख्यातो नाम्ना भुवि मदनसंजीवन इति
द्विवल्लाभ्यां तुल्यो घृतमधुसितादुग्धसहितः ।
निपीतः सप्ताहं मधुरमधुराहारसहितो
नरं कुर्यान्नारीशतसुरतसुप्रीतिहृदयम् ॥ ९१ ॥
हन्यादुन्मादमुग्रं क्षयगदमरुचिं कामलामम्लपित्तं
सर्वान्पित्तोर्ध्वरोगान्रुधिरभवगदान्रक्तपित्तज्वरांश्च ।
रक्तार्शः पित्तगुल्मं सततमतिमहानाहमन्तर्विदाहं
पाण्डुं मेहांश्च मोहं प्रदरगदमपि स्त्रीजनस्योग्रमाशु ॥ ९२ ॥

अथ मदनमोदकः—त्रैलोक्यविजयापत्रं घृतेनाभर्जितं कियत् ।
त्रिकटुत्रिफलामुस्ताकुष्ठसैन्धवधान्यकम् ॥ ९३ ॥
सटीतालीसपत्रं च कट्फलं नागकेसरम् ।
अजमोदा यवानी च यष्टी मधुकमेव च ॥ ९४ ॥
मेथी जीरकयुग्मं च सबीजं भर्जितं तथा ।
यावदेतानि चूर्णानि तावदेव तदौषधम् ॥ ९५ ॥
तदेव सितया ग्राह्यं यावदायाति बन्धनम् ।
घृतेन मधुना युक्तं मोदकं परिमिश्रितम् ॥ ९६ ॥
त्रिसुगन्धिसमायुक्तं कर्पूरेणापि वासयेत् ।
स्थापयेद्घृतभाण्डेऽस्मिञ्श्रीमन्मदनमोदकान् ॥ ९७ ॥
भक्षयेत्प्रातरुत्थाय वातश्लेष्मविनाशनम् ।
कासघ्नं सर्वशूलघ्नं वन्हीपलितनाशनम् ॥ ९८ ॥
आमवातविकारघ्नं मेहकुष्ठगदव्रणान् ।
सदा निषेवयेद्धीमान्रुच्यमग्निविवर्धनम् ॥ ९९ ॥
नारदप्रमुखाः सर्वे वासुदेवे जगत्पतौ ।
तेन लब्ध्वा वरस्त्रीणां प्रियमेकं सुनन्दनम् ॥ १०० ॥

अथ लिङ्गलेपः—शशिसूतकटङ्कणमागधिकं घनसूरणमाक्षिकदेवरसम् ।
मुनिपत्ररसप्लुतलेपवरं सुरतीमदपातनवश्यकरम् ॥ १०१ ॥

अथ द्रावणम्—पोपागभेदक सूतं मधुना सह लेपयेत् ।
अवश्यं द्रावयेन्नारीं कुष्टकाष्ठोपमामपि ॥ १०२ ॥

१ प. [illegible] । २ घ. [illegible] । ३ [illegible] । ४ [illegible] ॥ ९४ ॥
५ [illegible] । ६ [illegible] । ७ [illegible] ।

**अथ पुष्पधन्वा रसः**—रम्भाकन्दे हेमताराकपिष्टी पक्का यन्त्रे भूधरे तं पचेत ।
गन्धं दत्वा षड्गुणार्धं क्रमेण पश्चात्कान्तं तेन तुल्यं क्रमेण ॥ १०३ ॥
दत्वा खल्वे शाल्मलीयष्टितोयैः पक्षैकं तन्मर्दयेन्नागवल्ल्याः ।
नीरैर्यामं पुष्पधन्वा रसः स्याद्वल्लं दद्यादस्य पूर्वोक्तयुक्त्या ॥ १०४ ॥
पुष्टिं वीर्यं दीपनं सोऽत्र दद्याद्धन्याद्रोगान्रोगयोग्यानुपानैः ॥ १०५ ॥

**अथ लिङ्गलेपः**—सिन्दूरमधुनो लेपं लिङ्गस्य कुरुते यदि ।
अत्यर्थं रमते नारीं द्रावयेद्वशमानयेत् ॥ १०६ ॥

**रसेन्द्रचूडामणिः**—सूतहेमभुजगाभ्रवङ्गकाः कान्तताप्यविमलाः समाक्षिकाः ।
भागवृद्धिमिलिता विमर्दिता धूर्तपत्रविजयासलिलेन ॥ १०७ ॥
सप्तसप्त चपलामृतवल्ली — — —सुररतांजलतोयैः ।
वारिवाहमृतयष्टिकावरीवानरीभुजगदष्टयुदकेन ॥ १०८ ॥
अर्धभागमहिफेनकं न्यसेन्मर्दयेत्सुरसपुष्परसेन ।
चन्दनार्ककरहाटपिप्पली श्रावणीकृतरसौ पृथगेव ॥ १०९ ॥
कुङ्कुमेन च ततो विभावयेन्नाभिजद्रवयुतं त्रिभावयेत् ।
सिद्धिमेति रसराडयं शुभः कामिनीमदविधूननदक्षः ॥ ११० ॥
शर्करामधुयुतो द्विमाषकः स्तम्भकृन्निधुवने वनितानाम् ॥ १११ ॥
संसेव्य सूतं न च रात्रिभोज्यं कुर्वीत पेयं पय एव केवलम् ।
तृतीययामे रससेवनं तु कृत्वा निशायाः प्रहरे व्यतीते ॥ ११२ ॥
सेवेत कान्तां कमनीयगात्रां घनस्तनीमुज्ज्वलचारुवस्त्राम् ।
रत्युत्सुकां कातरलोलनेत्रां विलोलहारावलिमादधानाम् ॥ ११३ ॥
किं कामेन तनुकामिनां मलयजेनावश्यजेनाथ किं ।
किं चन्द्रेण परोपतापजनिना पुंस्कोकिलेनापि किम् ॥ ११४ ॥
सहस्रशः सन्ति यदा तरुण्यो मदालसाः पीनपयोधरा दृढाः ।
तदा रसेन्द्रः परिपेवणीयो विकारकारी भवतीह नान्यथा ॥ ११५ ॥

**अथ कामेश्वरो मोदकः**—सम्यञ्जारितमभ्रकं कटुफलं कुष्ठाश्वगन्धा वचा
मेथी मोचरसो विदारिमुसलीगोक्षुरकोन्दूरकम् ।
रम्भाकन्दशतावरी द्यजमुदा माषास्तिला धान्यकं
यष्टीनागबलार्कचूरमदनं जातीफलं सैन्धवम् ॥ ११६ ॥

---

१ प. भार्ग । २ प. °धुना ले° । ३ क. सूता । ४ क. °रभुर° । ५ क. °कचोरसमं ।

रसः ख्यातो नाम्ना भुवि मदनसंजीवन इति
द्विवल्लाभ्यां तुल्यो घृतमधुसितादुग्धसहितः।
निपीतः सप्ताहं प्रचुरमधुराहारसहितो
नरं कुर्यान्नारीशतसुरतसुप्रीतिहृदयम्॥ ९१॥
हन्यादुन्मादमुग्रं क्षयगदमरुचिं कामलामम्लपित्तं
सर्वान्पित्तोर्ध्वरोगान्रुधिरभवगदान्रक्तपित्तज्वरांश्च।
रक्तार्शः पित्तगुल्मं सततमतिमहानाहमन्तर्विदाहं
पाण्डुं मेहांश्च मोहं प्रदरगदमपि स्त्रीजनस्योग्रमाशु॥ ९२॥

**अथ मदनमोदकः**—त्रैलोक्यविजयापत्रं घृतेनाभर्जितं क्षिपेत्।
त्रिकटुत्रिफलामुस्ताकुष्ठसैन्धवधान्यकम्॥ ९३॥
सटीतालीसपत्रं च कट्फलं नागकेसरम्।
अजमोदा यवानी च यष्टी मधुकमेव च॥ ९४॥
मेथी जीरकयुग्मं च गवीजं भर्जितं तथा।
यावदेतानि चूर्णानि तावदेव तदौषधम्॥ ९५॥
सदेव सितया ग्राह्यं यावदायाति बन्धनम्।
घृतेन मधुना युक्तं मोदकं परिमिश्रितम्॥ ९६॥
त्रिसुगन्धिसमायुक्तं कर्पूरेणापि वासयेत्।
स्थापयेद्घृतभाण्डेऽस्मिञ्श्रीमन्मदनमोदकान्॥ ९७॥
भक्षयेत्प्रातरुत्थाय वातश्लेष्मविनाशनम्।
कासघ्नं सर्वशूलघ्नं वह्निमान्द्यविनाशनम्॥ ९८॥
आमवातविकारघ्नं मेहकृच्छ्रगलग्रहान्।
सदा निषेवणाद्धीमान्कामाग्निविवर्धनम्॥ ९९॥
नारदप्रमुखाः सर्वे वासुदेवे जगन्मतौ।
तेन रूपं वधूनां प्रियमेतं सुनन्दनम्॥ १००॥

**अथ लिङ्गलेपः**—[illegible]।
[illegible]॥ १०१॥

**अथ द्रावणम्**—[illegible] मधुना [illegible]।
[illegible] द्रावयत्याशु [illegible]॥ १०२॥

---

[illegible]

**अथ पुष्पधन्वा रसः**—रम्भाकन्दे हेमतारार्कपिष्टी पक्वा यन्त्रे भूधरे तं पचेत ।
गन्धं दत्त्वा षड्गुणार्धं क्रमेण पश्चात्कान्तं तेन तुल्यं क्रमेण ॥ १०३ ॥

दत्त्वा खल्वे शाल्मलीयष्टितोयैः पक्षैकं तन्मर्दयेन्नागवल्ल्याः ।
नीरैर्यामं पुष्पधन्वा रसः स्याद्वल्लं दद्यादस्य पूर्वोक्तयुक्त्या ॥ १०४ ॥
पुष्टिं वीर्यं दीपनं सोऽत्र दद्याद्धन्याद्रोगान्रोगयोग्यानुपानैः ॥ १०५ ॥

**अथ लिङ्गलेपः**—सिन्दूरमधुनो लेपं लिङ्गस्य कुरुते यदि ।
अत्यर्थं रमते नारीं द्रावयेद्वशमानयेत् ॥ १०६ ॥

**रसेन्द्रचूडामणिः**—सूतहेमभुजगाभ्रवङ्गकाः कान्ततारविमलाः समाक्षिकाः ।
भागवृद्धिमिलिता विमर्दिता धूर्तपत्रविजयासलिलेन ॥ १०७ ॥
सप्तसप्त चपलामृतवल्ली — — — सुररत्नजलतोयैः ।
वारिवाहमृतयष्टिकावरीवानरीभुजगदृष्टच्युदकेन ॥ १०८ ॥
अर्धभागमहिफेनकं न्यसेन्मर्दयेत्सुरसपुष्परसेन ।
चन्दनार्ककरहाटपिप्पली श्रावणीकृतरसौ पृथगेव ॥ १०९ ॥
कुङ्कुमेन च ततो विभावयेन्नाभिजद्रवयुतं विभावयेत् ।
सिद्धिमेति रसराडयं शुभः कामिनीमदविधूननदक्षः ॥ ११० ॥
शर्करामधुयुतो द्विमाषकः स्तम्भकृन्निधुवने वनितानाम् ॥ १११ ॥
संसेव्य सूतं न च रात्रिभोज्यं कुर्वीत पेयं पय एव केवलम् ।
तृतीययामे रससेवनं तु कृत्वा निशायाः प्रहरे व्यतीते ॥ ११२ ॥
सेवेत कान्तां कमनीयगात्रां घनस्तनीमुज्ज्वलचारुवस्त्राम् ।
रत्युत्सुकां कातरलोलनेत्रां विलोलहारावलिमादधानाम् ॥ ११३ ॥
किं कामे तनुकामिनां मलयजेनावश्यजेनाथ किं ।
किं चन्द्रेण परोपतापजनिना पुंस्कोकिलेनापि किम् ॥ ११४ ॥
सहस्रशः सन्ति यदा तरुण्यो मदालसाः पीनपयोधरा दृढाः ।
तदा रसेन्द्रः परिषेवणीयो विकारकारी भवतीह नान्यथा ॥ ११५ ॥

**अथ कामेश्वरो मोदकः**—सम्यङ्मारितमभ्रकं कटुफलं कुष्ठाश्वगन्धा वचा
मेथी मोचरसो विदारिमुसलीगोक्षुरकोन्दूरुकम् ।
रम्भाकन्दशतावरी ह्यजमुदा माषास्तिला धान्यकं
यष्टीनागवलार्कचूरमदनं जातीफलं सैन्धवम् ॥ ११६ ॥

---

१ प. भाग्ने । २ प. 'धुना ले' । ३ क. मृता । ४ ड. 'रेभुग' । ५ ड. 'कचोरदनं ।

भार्ङ्गी कर्कटशृङ्गिका त्रिकटुकं द्वे जीरके चित्रकं
चातुर्जातपुनर्नवागजकणाद्राक्षासनावत्सकम् ।
शाल्मल्यहृघ्रिफलत्रिकं कपिभवं बीजं समं चूर्णये-
च्चूर्णांशा विजया सिता द्विगुणिता मध्वाज्यमिश्रं तु तत् ॥ ११७ ॥
कर्षार्धा गुलिका विलेह्यमथवा कृत्वा च तत्सेवये-
त्पेयं रक्ष सितानुवीर्यकरणे स्तम्भोऽप्यलं कामिनाम् ।
रामावश्यकरः सुखातिसुखदः मौढाङ्गनाद्रावकः
क्षीणे पुष्टिकरः क्षयक्षयकरो नानामयध्वंसकः ॥ ११८ ॥
नित्यानन्दकरो विशेषकविताचाविलासोद्भवं
धत्ते सर्वगुणं महास्थिरधियां ध्यानावसाने दृढम् ।
अभ्यासेन निहन्ति मृत्युपलितं कामेश्वरो वत्सरा-
त्सर्वेषां हितकारको निगदितः श्रीनित्यनाथेन वै ॥ ११९ ॥

अथ पूर्णचन्द्रः—कृकवाकुग्रपिच्छं तु मुद्रिकाकारकं कृतम् ।
ऊर्णनाभेः सुजालेन वेष्टयित्वाऽथ धारयेत् ॥ १२० ॥
वामहस्तकनिष्ठायां नरो वीर्यं न मुञ्चति ।
कर्पूरं टङ्कणं सूतं मुनिपुष्परसं मधु ॥ १२१ ॥
मर्दयित्वा लिपेत्तेन लेपो यावत्तु तिष्ठति ।
लिङ्गं तु पुण्डरीकस्य चूर्णीकृत्य प्रयोजयेत् ॥
मधुना तिलकं कृत्वा रेतस्तम्भकरो ह्यलम् ॥ १२२ ॥
सूतं गन्धं चाश्वगन्धागुडूचीयष्टीतोयैर्वासरैकं विघृष्य ।
क्षुद्रं शङ्खं मुक्तकं लोहकिट्टं भस्मीभूतं सूततुल्यं च दद्यात् ॥ १२३ ॥
कूष्माण्डैर्वा वासरैकं विघृष्य गोलं कृत्वा भूधरे तं पुटेत ।
चूर्णं कृत्वा नागवल्लीरसेन दद्यादेवं मर्दयित्वा दिनैकम् ॥ १२४ ॥
मध्वाज्याभ्यां पूर्णचन्द्रं रसेन्द्रं पुष्टि वीर्यं दीपनं चैव कुर्यात् ।
योज्यश्चायं पित्तरोगे ग्रहण्यामर्शोरोगे पित्तजे चोल्पुंक्तः ॥ १२५ ॥
स्त्रीणां तापे शाल्मलीनीरयुक्तं योज्यं भोज्यं वासितं वा विपक्वम् ॥१२६॥
शुद्धं गन्धं वाजिगन्धां च यष्टिं मागन्ध – – – – माजिगन्धाम् ।
मध्वाज्याभ्यां शाल्मलीसत्त्वयुक्तां शम्बूकैर्वा भुज्यते वाऽज्यमिश्रैः ॥१२७॥

---

१ ङ. °सद्रीचालक°। २ घ. °श्रतन° ॥ ११६ ॥ ३ ङ. कर्षार्धा गुटिका विलेह्य°। ४ ङ. °त्वा सदा सेवयेच्छीत्वा क्षीररि°। ५ ङ. °स्तम्भन्यल। ६ ङ. तु मृद्वीकाकारता कृ°। ७ घ. गुणेनामस्तु नाले°। ८ ङ. लिङ्ग। ९ ङ. °त्वा रत°। १० ङ. °रोन्यल°। ११ ङ. लोहतुल्यं°। १२ ङ. °युक्तम् ॥ १२४ ॥ १३ ङ. °ज्य वाऽऽज्य ना सि°। १४ ङ. वाऽति प°।

**अथ मदनसंजीवनः**—कर्पूररससंयुक्तं सौभाग्यरससंयुतम्।
लेपाय क्रियते नित्यं नाम्ना मदनजीवनः॥ १२८॥

**अथ महाकल्कः**—धान्याभ्रकं विनिक्षिप्य मुसलीरसमर्दितम्
स्थाल्यां क्षिप्त्वा निरुध्याथ पिधान्या मध्यरन्ध्रया॥ १२९॥
स्थाल्यधो ज्वालयेद्वह्निं यामपर्यन्तमुद्धतम्।
ततः क्षिपेत्पिधान्यां हि व्योम्नस्त्वष्टगुणं पयः॥ १३०॥
जीर्णे पयसि पिष्ट्वा तत्तालमूलीरसैः पुनः।
इत्थं हि साधयेद्व्योम त्रिवारमतियत्नतः १३१॥
अजादुग्धैः पुटैः पश्चाद्वाराणि खलु विंशतिः।
कम्पिल्लकरसेनापि विष्णुक्रान्तारसेन च॥ १३२॥
कदलीकन्दतोयेन तालमूलीरसेन च।
शतवारं पुटेदेवं भवेद्व्योम रसायनम्॥ १३३॥
तद्व्योमभसितं ताप्यभस्म ताम्रस्य भस्म च।
शुल्बभस्म च तत्सर्वं समांशं परिकल्पयेत्॥ १३४॥
भावयेत्सप्तधा निम्बरसैर्लोध्ररसेन च।
केतक्या मार्कवस्यापि कदल्यास्त्रिफलस्य च॥ १३५॥
कोरकस्यापि सारेण तावद्वाराणि यत्नतः।
इति निष्पन्नकल्केऽस्मिंस्तत्समां त्रिफलां क्षिपेत्॥ १३६॥
भस्मसूतं सिताव्योपं चित्रकं च पृथक्पृथक्।
मधुना गुटिकाः कार्याः शाणेन प्रमिताः खलु॥
महाकल्क इति ख्यातो दस्राभ्यां परिकीर्तितः॥ १३७॥

**अथ दिव्यामृतरसः**—एकां गोलीं समारभ्य तथैकैकां विमर्दयेत्।
चतुर्गोलकपर्यन्तं मण्डले मण्डले खलु॥ १३८॥
सेवितो द्वादशाब्दं तु जरामृत्युविवर्जितः।
सर्वव्याधिविनिर्मुक्तो दृढदीपनपाचनः॥ १३९॥
भीमतुल्यबलः श्रीमान्पुत्रसंततिसंयुतः।
वर्वारोग्यमयो भीमसमानभुजविक्रमः॥ १४०॥
सर्वायाससहिष्णुश्च शीतातपसहस्तथा।
अमन्दसंमदोपेतः प्रौढस्त्रीरतिरञ्जनः॥ १४१॥

---

१ घ धृत्वा। २ ध. °भान्तर°। ३ क. °मसमि°। ४ घ. °व्योमनि°। ५ ग. °वैक ति°। ६ क. °दृढरोगोऽग्निदीपन। ७ घ. शीतताप°। ८ ट. °मन्द. स°।

फाचार्मपिल्लाभिष्यन्दव्रणशुक्लगर्तिमणुत् ।
तत्किट्टं दद्रुकिटिभपामादीन्लेपनाज्जयेत् ॥ २३ ॥
मारितं त्रपुसं सीसं हारिणं शृङ्गमाकुली ।
कार्पासवासितं तक्रं माहिषं च प्रमेहजित् ॥ २४ ॥
नवनवति त्रिफलाया मृतस्य नागस्य शततमो भागः ।
दार्व्याकुलीफलत्रयकनकजलप्रस्थपेषितं निखिलम् ॥ २५ ॥
शेतगुलिकाप्रमितं तत्पिष्टीतक्रेण मेहहरम् ।
पिबतः कषायमभयादार्व्यक्षसमांशपाठायाः ॥ २६ ॥
कृष्णलोहेन योक्तव्यो वालेनोपचितो हि सः ।
कुमारयूनमध्ये तु वरमध्यावरे क्रमात् ॥ २७ ॥
एकद्वित्रिगुणात्कालादुपयुक्तं गुणावहम् ।
एरण्डवह्निशम्बूकवर्षाभूव्योषसैन्धवम् ॥ २८ ॥
अन्तर्धूमविदग्धापाश्चूर्णं सोष्णाम्बु शूलजित् ।
त्रिफलामृतनिर्गुण्डीमेघनादपुनर्नवा ॥ २९ ॥
कासमर्दालिधत्तूरवज्रिणीनां रसैरिदम् ।
भावितं गुडमध्वाज्यैर्जलतक्रानुपायिनः ॥ ३० ॥
स्वल्पक्षीररसांशस्य हन्याज्जीर्णज्वरं क्षयम् ।
कुष्ठास्थिस्रावपाण्ड्वर्शःपक्तिशूलप्लिहामपान् ॥ ३१ ॥
बाकुचीनिम्बपञ्चाङ्गं वेल्लचित्रकवत्सकम् ।
पथ्यानागरशम्याकगुडूचीकटुकीफलम् ॥ ३२ ॥
खदिरासनसारेण भावितं लोहभस्म च ।
कर्षमात्रं समध्वाज्यं क्षयकुष्ठनिषूदनम् ॥ ३३ ॥
गुडस्य कुडवे पक्वं लोहभस्म पलोन्मितम् ।
कोलप्रमाणं रोगेषु तैस्तैर्योगैः प्रयोजयेत् ॥ ३४ ॥
व्योषादिनवकस्यांशास्तथांऽशो लोहभस्मतः ।
अंशोऽश्मजतुनः खण्डस्याष्टौ सर्वं समाक्षिकम् ॥ ३५ ॥
कान्तपात्रगतं यक्ष्मज्वरापस्मारघस्मरम् ।
निम्बसारत्रिमधुरत्रिफलालोहगन्धकम् ॥ ३६ ॥
चूर्णमर्जुनपत्र्या वा सभृङ्गत्रिफलांपसम् ।
सेवितं मधुसर्पिर्भ्यां जरावैरूप्यनाशनम् ॥ ३७ ॥

---

१ ङ. °स वारि° । २ क. °वासना° । ३ ग. °संपिष्टित । ४ घ. माक्षिकं । ङ. माहिष्य । ५ ग. दशगु° । ६ ङ. तस्मिन त° । ७ घ. °पर्वाह्नित° । ८ घ. °न्मितं° । ९ ङ. °लागुनम् ।

मधुकं मृतलोहं च धात्री च त्रिगुणोत्तरम् ।
रसेन भावितं छिन्नरुहायाः साज्यमाक्षिकम् ॥ ३८ ॥
सेवितं भोजनस्यादौ वातपित्तामयाञ्जयेत् ।
मध्ये प्रविष्टमन्तेऽम्लपित्तं शूलं च पक्तिजम् ॥ ३९ ॥
भल्लातकसहस्राभ्यां त्रिफलामुस्तचित्रकैः ।
हस्तिपिप्पल्यपामार्गसहदेवीकुटेरकैः ॥ ४० ॥
कणामूलामृताचव्यैर्द्रोणेऽपां कुडवोन्मितैः ।
पक्के पदस्थे लोहस्थे तुलार्धं तीक्ष्णलोहतः ॥ ४१ ॥
मानिकां च घृतात्पक्त्वा विडङ्गं चित्रकं त्वचम् ।
त्रिफला पञ्चलवणं त्र्यूषणं च पृथक्पलम् ॥ ४२ ॥
पलानि सूरणस्याष्टौ वाराह्या वृद्धदारुकात् ।
चतुष्पलं पुष्परसस्यार्धप्रस्थं च निक्षिपेत् ॥ ४३ ॥
प्रातर्भोजनकाले वा लीढमेतद्रसायनम् ।
निहन्ति च ग्रहण्यर्शःशूलगुल्मक्रिमिक्षयान् ॥ ४४ ॥

**अथ खण्डखाद्यम्**—वासाभाङ्गर्यमृताभीरुवचाखदिरपुष्करैः ।
मुसलीभिक्षुकोरण्टैः सूर्पचापां च मुष्टिकैः ॥ ४५ ॥
पक्केऽष्टशिष्टे ताम्रस्थे प्रस्थांशे खण्डसर्पिषी ।
ताप्येन रुक्मलोहस्य हतस्याप्यञ्जलित्रयम् ॥ ४६ ॥
पक्केऽस्मिंल्लीढतां याते कुस्तुम्बुरु शिलाजतु ।
शृङ्गीविडङ्गत्रिफलाजातीफलकटुत्रिकम् ॥ ४७ ॥
चातुर्जातं च शुक्त्यंशं प्रस्थार्धं मधु च क्षिपेत् ।
खण्डखाद्यमिदं लीढं कर्षमात्रं रसायनम् ॥ ४८ ॥
क्षीरानुपस्य क्षपयेत्क्षयकासारुचिक्रमान् ।
शीतपित्ताम्लपित्तास्रवातपित्तास्रकामलाः ।
कुष्ठमेहप्लिहानाहकार्श्यं शूलं च पक्तिजम् ॥ ४९ ॥
अथोष्णवारिपिष्टेन कान्तलोहं ससिन्धुना ॥ ५० ॥
कफे कुठारच्छिन्नेन पित्ते गर्भे गलाम्बुना ।
उभयेन वयस्तम्भे ताप्येन गलरुक्षु च ॥ ५१ ॥

१ घ. °मतेऽम्ल° । २ ग. °भात्त° । ३ ग. °वणत्र्यू° । ४ ग. प । ५ घ. °लमवनि° । ६ च °लीमिक्षु° । ७ घ. °ण्टैः सूर्पे° । ८ क. हस्तस्या° । ९ ङ. स्मिँल्लिह° । १० ङ. °पं च मधु क्षि° । ११ ङ °चिभ्रमा° । १२ ङ. कुष्ठ हलीमकाना° । १३ ङ. कुमार° । १४ घ. °स्कन्ने° । १५ क. गर्ते । ज वाते ।

द्वन्द्ववृध्या दिने द्वे द्वे परं विंशतिवासरान्।
प्रतिविंशतिगुञ्जानां भागौ द्वौ भागमेव च ॥ ६६ ॥
प्राग्भक्तमर्धमर्धं वा भक्षयेदुक्तकालयोः।
एवं मात्राविभागेन व्याधिक्षीणोऽपि सर्वदा ॥ ६७ ॥
लोहादष्टगुणं क्षीरं धारोष्णं शृतमेव वा।
वपःस्तम्भेऽनुपातव्यं व्याधौ क्रोधो यथोदितः ॥ ६८ ॥
आस्वाद्य चानु मुस्तानां निर्यासं दन्तपीडितम्।
मूलानि भक्षयेच्चासामास्यवैरस्यनुत्तये ॥ ६९ ॥
क्रूरकोष्ठस्तु दीप्ताग्निरनुलोमयितुं मलान्।
तप्तं क्षीरं पिबेद्भूयस्ताम्बूलं भक्षयेन्मुहुः ॥ ७० ॥
स्नानमर्दनविष्टम्भि विदाह्यम्लमजाङ्गलम्।
सप्त सप्ताहमथवा त्रिःसप्ताहं परित्यजेत् ॥ ७१ ॥
शालिमुद्गरसं सर्पिर्वेत्राग्रं बृहतीद्वयम्।
दीर्घे पटोलवार्ताके तालकं मूलकन्दकम् ॥ ७२ ॥
शातावर्यां सञ्जीवन्तीशृङ्गाटमुनिपण्णकम्।
तन्दुलीयकधान्याकं सराजक्षववास्तुकम् ॥ ७३ ॥
जाङ्गलं शफराः कृष्णमीना रोहितमद्गुरौ।
द्राक्षादाडिमखर्जूररम्भाकोलं च शस्यते ॥ ७४ ॥
जीर्णौषधस्तु दीप्तेऽग्नौ प्रातः पित्ताद्बुभुक्षितः।
अर्धमात्रं पिबेत्क्षीरं सार्धमात्रं कृशो नरः ॥ ७५ ॥
दिवसाः सप्त सप्तास्मिन्दिने द्वित्रिगुणाः क्रमात्।
जघन्यमध्यप्रवरः सेवाकालो विधीयते ॥ ७६ ॥
पूर्वक्रियेयं द्विगुणा सोत्तरा नात्र यन्त्रणा।
यथाकालं मलोत्सर्गः शरीरोदरलाघवम् ॥ ७७ ॥
हृदयोद्गारशुद्धिश्च जीर्णलोहस्य जायते।
लोहाप्रवृत्तौ सामत्वं लोहकिट्टप्रशान्तये ॥ ७८ ॥
उष्णाम्बु सयवक्षारं त्रिदिनात्रिदिनात्पिबेत्।
रसेनागस्त्यपत्राणां विडङ्गं चान्तरान्तरा ॥ ७९ ॥

---

१ ग. भागो। २ ख. प्राग्भुक्त°। ३ च. °म्भे तु पा°। ४ ख. धारे। ५ ग. स्नानं म°। ६ क. °न्दवः ॥ ७२ ॥ ७ क. °वर्याः स°। ८ घ. °ङ्गाटं सनिशाम्र°। ९ घ. °र्जूरं र°। १० ध. पूर्वाक्रि°। ११ ग. मदोत्सर्गः। १२ क. °हृत्तो सा°।

क्वाथमश्वत्थपत्राणां प्रसङ्गे छर्दिशूलयोः ।
सामान्यसिद्धिमावाप्य भावनापुटपाचनैः ॥ ८० ॥
यथायोगयुतं पक्वं त्रिफलाक्वाथसर्पिषा ।
साधितं भक्षयेत्कान्तमेकं वा केवलाभ्रकम् ॥ ८१ ॥
इह नानुपिबेत्क्षीरं न कुर्यात्तेन भोजनम् ।
मुद्गयूषं पिबेत्तोये कोष्णं च नियतो भवेत् ॥ ८२ ॥
एतल्लोहरसायनाख्यममृतं पक्वं यथोक्तं क्रमा-
द्भुञ्जानः प्रतिवत्सरं नववपुः सार्धं तु वर्णेन्द्रियैः ।
दीर्घायुर्नवयौवनोन्नतकुचप्रौढाङ्गनावल्लभो
मेधावान्तबलो जराविरहितः पुत्रावृतः स्यान्नरः ॥ ८३ ॥
अङ्कोललोहमणिटङ्कणमाणिमन्थताप्यार्द्रकत्रिकटुतुत्थशिलाजतूनाम् ।
भृङ्गोदफेन वटिकां च मसूरमात्रां खादेज्जयाय जरसः सकलामयानाम् ॥ ८४ ॥
अङ्कोल्लवेल्लाभ्रककान्तताप्यशिलाजतुव्योपफलत्रयाणाम् ।
चूर्णं मुसल्याः समभागमेतत्कुष्ठानि लीढं मधुना धुनोति ॥ ८५ ॥
कान्ताभ्रत्रिफलाविडङ्गरजनीताप्याभ्रदेवद्रुम-
व्योषैलाग्निपुनर्नवाङ्घ्रिगिरिजोङ्कोल्लैः समं गुग्गुलुम् ।
पिष्ट्वा भृङ्गजलेन सूक्ष्मगुलिकां खादेद्यथासात्म्यतो
मेदःश्लेष्मसमीरणोल्वणगदेष्वन्येषु वा पुरुषः ॥ ८६ ॥
व्योषं कृष्णतिलासनस्य कुसुमं भण्डूरसैरेयकं
दोषाशैलसिताश्रिवृत्क्रिमिहरं भृङ्गानि भल्लातकम् ।
श्रेष्ठावाकुचिकान्तलोहजरसस्तत्कान्तपात्रे स्थितं
खादेत्कुष्ठहरं रसायनवरं मध्वाज्यसंयोजितम् ॥ ८७ ॥
मण्डूरत्रिफलासितेतरतिलाजातीविडङ्गाकुली-
वाकुच्यभ्रककान्तगन्धकनिशामाक्षिकसारं रजः ।
पिष्ट्वा भृङ्गरसेन तस्य वटकान्खादेत्पयःपाचिता-
न्सर्वव्याधिहरान्रसायनवरान्मृत्योश्च मृत्युप्रदान् ॥ ८८ ॥

---

१ ग. °वाप भा° । २ ख. °क्षोग्रदु° । ३ ग. °ङ्निाम् । ४ ग. मोह । ५ ग. °न्द्रियः । ६ घ. °भीमला° । ७ घ. भ्राद्दन्ता° । ८ ग. °दन्तिष° । ९ घ. °ङ्कोठ्ये° । १० ग. °उच्चोल्लैः स° । ११ ग. °धान्यसितो । १२ व्योष शैं° (साधीयान्) । १३ ग. °हरजम° । घ. °हराज्म° । १४ घ. °मृत्योश्च° । १५ ग. °जातावि° ।

मधुमागधिकाविडङ्गसारत्रिफलाहेमघृतं सितां च खादेत् ।
जरयानवलीढदेहकान्तिः समधातुश्च समाः शतं च जीवेत् ॥ १०० ॥
आयुष्कामः शङ्खपुष्प्या समेतं मेधाकामः काञ्चनं सोग्रगन्धम् ।
लक्ष्मीकामः पद्मकिञ्जल्कयुक्तं खादेत्कामं कामकामो विदार्या ॥ १०१ ॥
सपद्मवीजामलकाभयाक्षं सर्पिर्मधुभ्यां कनकं लिहन्तः ।
दीर्घायुषो मन्दजरोपतापाः सरीसृपाणां च भवन्त्यगम्याः ॥ १०२ ॥
मृतानि लोहानि रसीभवन्ति निघ्नन्ति रोगान्परिशीलितानि ।
किञ्चोपचारस्य समग्रयोगात्पुष्यन्ति धातूनंतिदीर्घमायुः ॥ १०३ ॥ ३५८० ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये मृतलोहकल्पनिरूपणं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

अथैकोनत्रिंशत्तमोऽध्यायः।

[ अथ विषकल्पः । ]

ईश्वर उवाच । शृणु देवि प्रवक्ष्यामि यत्रोत्पन्नं महाविषम्।
भेदांस्तस्य वरारोहे यत्र तत्र सविस्तरम् ॥ १ ॥
देवदैत्योरगाः सिद्धा अप्सरोयक्षराक्षसाः ।
पिशाचाः किंनराश्चैव मिलित्वा च वरानने ॥ २ ॥
एकतो वलिराजश्च ब्रह्माद्याश्च तथैकतः ।
मन्थानं मन्दरं कृत्वा नागराजेन वेष्टितम् ॥ ३ ॥
क्षीराब्धिमन्थनं तत्र प्रारब्धं सुरसुन्दरि ।
निर्गतास्तत्र रत्नौघाः कामधेन्वादयः प्रिये ॥ ४ ॥
अमला कमलोत्पन्ना पश्चादुच्चैश्रवास्ततः ।
ऐरावतो महाकायो निर्गतं देवि चामृतम् ॥ ५ ॥
अतीव मन्थनादेवि मन्दराघातवेगतः ।
अहिराजश्रमादेवि विषज्वाला विनिर्गता ॥ ६ ॥
ततोऽति घोरा सा ज्वाला निमग्ना क्षीरसागरे ।
तया तत्रैव चोत्पन्नं कालकूटं महाविषम् ॥ ७ ॥
मलयानलसंकाशः क्रुद्धः काल इवोत्कटः ।
तं दृष्ट्वा विबुधाः सर्वे दानवाश्च महाबलाः ॥ ८ ॥

---

१ घ. खादन् । २ घ. प्रन्तेव । ३ ग. लुण्णानि । ४ घ. मनु दी । ५ ज. भेदं तस्य । ६ घ. °गताः । ७ ख. श्राम । ८ क. तद्दृष्ट्वा । ९ ज. महेश्वरः ।

विषण्णवदनाः सद्यः प्राप्ताश्चैव मदन्तिकम् ।
ततस्तैः प्रार्थ्यमानोऽहमपिवं विषमुत्तमम् ॥ ९ ॥
ततोऽवशिष्टमभवन्मूलरूपेण तद्विषम् ।
पत्ररूपेण कुत्रापि मृत्तिकारूपतः क्वचित् ॥ १० ॥
कुत्रचित्तोयरूपेण धातुरूपेण कुत्रचित् ।
कन्दरूपेण कुत्रापि त्रयोदशविधं विषम् ॥ ११ ॥
तेषु श्रेष्ठं कन्दविषं त्रयोदशविधं स्मृतम् ।
कर्कटं कालकूटं च वत्सनाभं हलाहलम् ॥ १२ ॥
वालुकं कर्दमं चैव सक्तुकं मूलकं तथा ।
सर्षपं शृङ्गकं देवि मुस्तकं च महाविषम् ॥ १३ ॥
हारिद्रकमिति प्रोक्तं त्रयोदशविधं विषम् ।
कर्कटं कपिवर्णं स्यात्काकचञ्चुनिभं पुनः ॥ १४ ॥
कालकूटं ततो ज्ञेयं वत्सनाभं तु पाण्डुरम् ।
भृङ्गराकन्दवद्देवि नीलवर्णं हलाहलम् ॥ १५ ॥
वालुकं वालुकाभं च कर्दमं कर्दमोपमम् ।
सक्तुकं श्वेतवर्णं तच्छुक्लकन्दं तु मूलकम् ॥ १६ ॥
सर्षपं पीतवर्णं स्याच्छृङ्गीकं कृष्णपिङ्गलम् ।
मुस्ताभं मुस्तकं प्रोक्तं रक्तवर्णं महाविषम् ॥ १७ ॥
हारिद्रकं पीतवर्णं विषभेदाः प्रकीर्तिताः ।
चतुर्धा वर्णभेदेन विषं ज्ञेयं मनीषिभिः ॥ १८ ॥
ब्रह्मक्षत्रियविट्शूद्राः श्वेतरक्ताश्च पीतकाः ।
कृष्णवर्णाः क्रमाज्ज्ञेयो वर्णनामानुपूर्वशः ॥ १९ ॥
मारणे कृष्णवर्णं स्याद्रक्तं तु रसकर्मणि ।
पीतवर्णं क्षुद्रकार्ये श्वेतवर्णं रसायने ॥ २० ॥
क्षीरोदसागरे देवि मथ्यमाने वरानने ।
उत्पन्नममृतं देवि तथोत्पन्नं महाविषम् ॥ २१ ॥
आरोटं भक्षयेद्देवि विषं सर्षपमात्रकम् ।
प्रथमे दिवसे पश्चाद्द्वितीयादौ द्विसर्षपम् ॥ २२ ॥

---

१ क. विवर्णव° । २ च. स्मृतम् । ३ ज. °पं शृङ्गक चेति मु° । ४ ग. °र्णं स्याच्छुक्लतर° ।
५ ग. वर्णानामनु° । ६ च. °र्णाः क्षु° । ७ घ. °र्णो र° ।

पञ्चमे दिवसे देवि भक्षयेत्सर्षपत्रयम् ।
षट्सप्ताष्टदिनेऽप्येवं नवमे वेदसंख्यया ॥ २३ ॥
भक्षयेद्राजिकावृद्ध्या यावद्गुञ्जामितं भवेत् ।
मासमात्रप्रयोगेण कुष्ठान्यष्ट हरेद्विषम् ॥ २४ ॥
पुण्डरीकं सविस्फोटं श्वेतमौदुम्बरं तथा ।
छिन्नाभिन्नं कपालाख्यं क्लिन्नाह्वं शवगन्धि च ।
कुष्ठानि गदितान्यष्ट हन्याद्देवि महाविषम् ॥ २५ ॥
षण्मासस्य प्रयोगेण कामरूपो भवेन्नरः ।
संवत्सरप्रयोगेण सर्वरोगान्व्यपोहति ॥ २६ ॥
द्विवत्सरप्रयोगेण दिव्यदेहो भवेन्नरः ।
मात्रया भक्षितं देवि विषमप्यमृतायते ॥ २७ ॥
मात्राधिकं वरारोहे ह्यमृतं वा विषं भवेत् ।
अमृतं सहसा युक्तं[1] शीलितं विषमेव वा ॥ २८ ॥
सात्म्यासात्म्यं[2] विकाराय मृत्यवे च वरानने ।
वेगान्यष्ट प्रजायन्ते सहसा विषशीलिनः ॥ २९ ॥
प्रथमे त्वग्विकारः स्याद्द्वितीये वेपथुर्भवेत् ।
दाहो[3] वेगे तृतीये स्याच्चतुर्थे विकृतो भवेत् ॥ ३० ॥
फेनोद्गतिः पञ्चमे स्यात्स्कन्धयोर्भञ्जनं ततः ।
जाड्यता सप्तमे वेगे चाष्टमे मरणं ध्रुवम् ।
एवं ज्ञात्वा वरारोहे प्रतीकारं समाचरेत् ॥ ३१ ॥
पित्तान्तं वमनं कुर्यादामान्तं *रेचनं तथा ।
जातीनीलीश्वरीसिन्धुकाचमाच्यद्रिकर्णिका ॥ ३२ ॥
त्रिफला करवीरं च कुष्ठं मधुकजीरकम् ।
क्षीरवृक्षत्वगेलेति विषघ्नोऽयं गणः स्मृतः ॥ ३३ ॥
विषघ्नं गोघृतं देवि माङ्गल्यं जीवनं स्मृतम् ।
अश्वगन्धां सगोजिह्वां त्रिशूलीं त्रिफलामपि ॥ ३४ ॥
प्रथमं भक्षयित्वा च सेवयेद्गरलं ततः ।
ब्रह्मचर्यं वरारोहे विषकाले समाचरेत् ॥
पथ्यं स्वस्थमना भुक्त्वा तदा सिद्धिर्न संशयः ॥ ३५ ॥

---

* इत्यक्षराणि मयैव कल्पितानि ।

---

१ इ. युक्तं । २ ज. 'सात्म्यवि' । ३ इ. दाहो मेऽहस्तृती' ।

गव्ये क्षीरघृते पेये शाल्यन्नमिदमेव च ।
शीतलं च पिवेत्तोयं पित्तलानि च वर्जयेत् ॥ ३६ ॥
जाङ्गलानि च मांसानि छागलोहं च मद्गुरान् ।
शर्करां माक्षिकं क्षीरं सेवनीयं प्रयत्नतः ॥
एकादेवि सदा पथ्यमपथ्यं दूरतस्त्यजेत् ॥ ३७ ॥
उद्धृतं फलपाकेन नवं स्निग्धं घनं गुरु ।
अल्पापन्नं विपहरैरवातातपशोपितम् ॥ ३८ ॥
रक्तसर्पपतैलेन लिप्ते वाससि धारितम् ।
सक्तुकं मुस्तकं शृङ्गीवालुकं सर्पपाह्वयम् ॥ ३९ ॥
वत्सनाभं च कर्मण्यं कालकूटादिकं ततः ।
न जात्वन्यत्प्रयोक्तव्यं विपे तीक्ष्णे च चोरिते ॥ ४० ॥
अतिमात्रे च कर्मण्ये पेयं घृतमनन्तरम् ।
सभार्ङ्गीदधिधूमोत्थं सारिवातन्दुलीयकम् ॥ ४१ ॥
आगारधूममञ्जिष्ठायष्टयाह्वैर्वा समन्वितम् ।
लिह्याद्वा मधुसर्पिर्भ्यां चूर्णितामर्जुनत्वचम् ॥ ४२ ॥
टङ्कणं मेघनादेन मधुनां वाऽपि पल्लवान् ।
विपं युञ्जीत नित्यं वै रसायनंगुणेपिणः ।
घृतोपस्कृतदेहस्य विशुद्धस्य हिताशिनः ॥ ४३ ॥
सात्त्विकस्योदिते भानौ योज्यं शीतवसन्तयोः ।
ग्रीष्मे चाऽऽत्ययिके व्याधौ न वर्षासु न दुर्दिने ॥ ४४ ॥
न क्रोधिने न पित्तार्ते न क्लीबे राजवेश्मनि ।
क्षुत्तृष्णाश्रमघर्माध्वव्याध्यन्तरनिपीडिते ॥ ४५ ॥
गर्भिण्यां बालवृद्धेषु न रूक्षेषु न मर्मसु ।
अभ्यस्तेऽपि विपे यत्नाद्वर्जनीयान्विवर्जयेत् ॥
कट्वम्ललवणं तैलं दिवा स्वप्नानलातपान् ॥ ४६ ॥
दृग्विभ्रमं कर्णरुजमन्यांश्चानिलजान्गदान् ।
विपं रूक्षाशिनः कुर्यान्मृत्युमेव त्वजीर्णिनः ॥ ४७ ॥
अथ गोमूत्रसंयुक्तमातपे शोपयेत्र्यहम् ।
विपं बृंहणमेतद्धि विपस्याऽऽदौ प्रशस्यते ॥ ४८ ॥

१ अ. °का देवि । २ घ. °दुग्धस° । ३ झ. क्रम. । ४ च. चारिते । ५ घ. °धिधर्मोत्पन्ना° । ६ घ. °ष्टया चैव म° । ७ ज. °ना वलिप° । ८ झ. वालिप° । ९ग. °वान् । १० च. °नर्दैरि° । ११ घ. कृशेषु । १२ घ. °—

तत्पिबेन्मस्तुना वातज्वरे क्षीरेण पित्तजे।
यकृन्मूत्रेण कफजे सर्वजे त्रिफलाम्भसा॥ ४९॥
रोभचन्दनपङ्कन्थाशर्कराघृतमाक्षिकैः।
क्षीरेण च विषं युक्तं जीर्णज्वरहरं परम्॥ ५०॥
निकुम्भकुम्भत्रिफलासर्पिर्मधुविषैः कृतः।
निहन्ति मोदको जीर्णज्वरमेहत्वगामयान्॥ ५१॥
शिखिकेकिरसोपेतं विषमज्वरजिद्विषम्॥ ५२॥
विषं यष्ट्याह्वयं रास्ना सेव्यमुत्पलकन्दकम्।
तन्दुलोदकपीतानि रक्तपित्तस्य भेषजम्॥ ५३॥
रास्नाविडङ्गत्रिफलादेवदारुकटुत्रयम्।
पद्मकं क्षौद्रममृताविषं च श्वासकासजित्॥ ५४॥
सितारसविषक्षीरप्रवालमधुनाऽन्विताः।
श्वासहिध्मापहा लीढाश्छर्दिघ्नास्तु विषान्विताः॥ ५५॥
क्षौद्रोशीरमधुक्षाररजनीकुटजत्वचः।
च्यवनप्राशनोपेतं विषं क्षपयति क्षयम्॥ ५६॥
विजयापिप्पलीमूलं पिप्पलीद्वयचित्रकैः।
पुष्कराह्वासटीद्राक्षायवानीक्षारदीप्यकैः॥ ५७॥
सितापष्टिद्विबृहतीसैन्धवैः पालिकैः पचेत्।
सविषार्धपलैः प्रस्थं घृतात्तज्जीर्णभुक्पिबेत्॥ ५८॥
दुर्नाममेहगुल्मोर्मितिमिरक्रिमिपाण्डुकान्।
गलग्रहग्रहोन्मादकुष्ठानि च नियच्छति॥ ५९॥

अथ विषाविद्रावणो घृतः—मुस्तावत्सकपाठाग्निव्योपप्रतिविषाविषम्।
धातकीमोचनिर्यासं चूतास्थिग्रहणीहरम्॥ ६०॥
कृच्छ्रघ्नं विषपथ्याग्निदन्तीद्राक्षानिशात्रपाः।
शिलाजतु विषं त्र्यूषमुदावर्ताश्मरीहरम्॥ ६१॥
गोमूत्रंक्षीरमिन्धूत्थविषपाषाणभेदकम्।
वज्रवद्दारयत्पेतदेकतः पीतमश्मरीम्॥ ६२॥
त्रिफलास्वर्जिकाक्षारैर्विषं गुल्मप्रभेदनम्।
पिप्पली पिप्पलीमूलं विषं शूलहरं तथा॥ ६३॥

---

१ ख. °वंगिर°। २ घ. °न्वितः। ज. °न्विता। ३ ग. क्षौद्रक्षीर°। ४ घ. °कुष्ठन°। ५ घ °नी-थार°। ६ ङ. °त्मारीति°। ७ ग. °ण्डुराः। ८ च. °र्यासचू°। ९ ग. चूताग्नि°। १० ग. °प्रक्षाराग्नि-°पूर्वविष पा°। ११ ज. सेव तद्वत्नः पा°। १२ ग. °क्षार [ि]°।

विषं द्रवन्तीमधुकं द्राक्षारास्नासठीकणाः।
विषं वेल्लाग्निशिखीरं गुल्मप्लीहनिबर्हणम् ॥ ६४ ॥
प्लीहोदरघ्नं पयसा शताह्वाक्रिमिजिद्विषम्।
वाघसीमूलनिष्क्वाथपीतं कुष्ठहरं विषम् ॥ ६५ ॥
पर्यस्या राजवृक्षत्वक्त्रायन्ती वाकुची वेलात्।
प्लीहेभीभकणाभ्यां च विषं क्वाथेन कुष्ठजित् ॥ ६६ ॥
अवल्गुजैलुकजयाविडक्षारद्वयं विषम्।
लेपः ससैन्धवः पिष्टो वारिणा कुष्ठनाशनः ॥ ६७ ॥
चित्रकार्कजटाहस्तिपिप्पलीवाकुचीविषैः।
सचेन्द्रकैरेडगजकरञ्जफलसैन्धवैः ॥ ६८ ॥
सव्योपसर्जिकाक्षारयवक्षारनिशाह्वयैः।
अगारधूमसहितैर्वस्तमूत्रेण कल्कितैः ॥ ६९ ॥
भल्लातकाग्निशम्याकविषैर्वा मूत्रपेषितैः।
लेपो विचर्चिकादद्रुरसिकाकिटिभापहः ॥ ७० ॥
शम्याकपत्रत्वङ्मूलं विषं तक्रं च तद्गुणम्।
कुष्ठतुम्बरुबीजानि वाजिगन्धाम्लवेतसम् ॥ ७१ ॥
हरिद्रा वायसी रास्ना हरितालं मनःशिला।
पटोलनिम्बपत्राणि कणागन्धकसैन्धवम् ॥
विषं दारु शिरीषास्थि तत्र लेपेन कुष्ठजित् ॥ ७२ ॥
करञ्जकरवीरार्कमालतीरक्तचन्दनैः।
आस्फोताकुष्ठमञ्जिष्ठासप्तच्छदनिशानतैः ॥ ७३ ॥
सिन्धुवारवचाक्षैलैर्गवां मूत्रे चतुर्गुणे।
सिद्धं कुष्ठहरं तैलं दुष्टव्रणविशोधनम् ॥ ७४ ॥
कुष्ठाश्वमारभृङ्गार्कमूलस्नुक्क्षीरसैन्धवैः।
तैलं सिद्धं विषावाप्यमभ्यङ्गात्कुष्ठजित्परम् ॥ ७५ ॥
भद्रश्रीदारुमरिचद्विहरिद्रात्रिवृद्घनैः।
गोमूत्रपिष्टैः पलिकैर्विषस्यार्धपलेन च ॥ ७६ ॥
ब्राह्मीरसार्कजक्षीरगोशकृद्रससंयुतम्।
प्रस्थं सर्षपतैलस्य सिद्धमाशु व्यपोहति ॥ ७७ ॥

---

१ घ. °धुरा°। २ घ. °ण्ण। ३ ग. शिरो°। ४ क. °यसा ग°। ५ घ. बलात्। ६ ग. °द्व-ह्याम°। ७ घ. °मेल्लुज°। ८ घ. °येन गु°। ९ क. °अेल्गजार्वर्ज अक्षा°। ख. °जैरजि°। १० घ. °ध: सैन्धवाग्नि°। ११ क. °अदरिम्ना [ि]°। १२ ड. °घनैः°। १३ घ. °पलाशैः। १४ ड. °दारुजैः।

पानाद्यैः शीलितं कुष्ठदुष्टनाडीव्रणापचीः ।
विषं भल्लातकीद्वीपिगुञ्जानिम्बफलैर्जयेत् ॥ ७८ ॥
लेपोऽम्लपिष्टैः श्वित्राणि पुण्डरीकं च दारुणम् ॥ ७९ ॥
ककुभारुष्करद्वीपिस्पृक्कापत्रैलवालुकम् ।
पिष्टं खादिरतोयेन त्रिरात्रमुषितं पिबेत् ॥ ८० ॥
श्वित्री विषेण संघृष्टं तत्तत्स्फोटान्किलासजान् ।
कण्टकेन विभिद्याशु लेपैर्लिम्पेच्च कौष्टिकैः ॥ ८१ ॥
अथवा करवीरार्कमूलवाकुचिकाविषैः ।
वस्ताम्बुपिष्टैः सद्वीपिद्विपिपिप्पल्यरुष्करैः ॥ ८२ ॥
अथाऽऽस्तिकोक्तं श्वित्रारि तैलं–लाक्षासुराह्वमञ्जिष्ठाकुष्ठपद्मकसारिवाः ।
गुञ्जा मही कुरवको लाङ्गली वज्रकन्दकः ॥ ८३ ॥
वाराहीकन्दकास्फोता सप्ताह्वा गिरिकर्णिका ।
अर्काश्वमारयोर्मूलं नागपुष्पं नतं निशे ॥ ८४ ॥
दन्तीविषं हस्तिविषं पिप्पल्यो मरिचानि च ।
तैस्तैलं कटुतैलं वा चित्रस्याभ्यञ्जनं पचेत् ।
सवर्णकरणं श्रेष्ठमास्तिकस्य वचो यथा ॥ ८५ ॥
एरण्डतैलं त्रिफला गोमूत्रं चित्रकं विषम् ।
सर्पिषा सहितं पीतं वातार्तस्त्रमपोहति ॥ ८६ ॥
कोरकं विरनिर्ष्कांथेलाङ्गलीविषसर्षपैः ।
गन्धकोङ्कोलमरिचैः सस्नुक्क्षीरैर्विपाचितम् ॥
जयेद्यपोतिष्मतीतैलमनल्पत्वगगदानपि ॥ ८७ ॥
स्वरसं बीजपूरस्य वचाब्राह्मीरसं घृतम् ।
वन्ध्या पिबेत सविषं सा पुत्रैः परिवार्यते ॥ ८८ ॥
वीरालाङ्गलिकादन्तीविषपाषाणभेदकैः ।
प्रयोज्यो मूढगर्भाणां प्रक्षेपो गर्भमोचनः ॥ ८९ ॥
देवदारु विषं सर्पिर्गोमूत्रं कण्टकारिका ।
वचा वाक्स्तम्भनं हन्ति बुद्धेश्च परिवर्धनम् ॥ ९० ॥
विषं सर्पिः सिता क्षौद्रं तिमिरापहमञ्जनम् ।
विषं चैकमजाक्षीरवल्कितं घृतधूपितम् ॥ ९१ ॥

---

१ अ. पद्म । २ क. °वन्द्मोगु° । ३ ग °शि. श्वि° । ४ घ. °ष्ठ क्रदि° । ५ ग. °सर्जन्त । ६ क. °न्दना । ७ घ. °स्फोम्म° । ८ घ दान्ती° । ९ घ ना विन° । १० क. °भिल्कवरद । ११ घ. °तैल्मिं° । १२ अ °व र्धरनिष्काथे टाफ° । १३ घ. °पारो तन्द्व° । १४ग. °द्रन्तम° । १५ घ °व मुं° । १६ घ. प्रयोज्य ।

विषं धात्रीफलरसैरसकृत्परिभावितम् ।
अञ्जनं शङ्खसहितं प्रगाढं तिमिरं जयेत् ॥ ९२ ॥
विषमिन्द्रायुधं स्तन्यैर्घृष्टं काचजिदञ्जनम् ॥ ९३ ॥
बीजपूररसैर्घृष्टं विषं तद्वत्सितान्वितम् ।
विषं मागधिका द्वे च निशि काचघ्नमञ्जनम् ॥ ९४ ॥
शुक्रार्मजिद्विषं कृष्णायुक्तं गोमूत्रभावितम् ।
समुद्रफेनस्फटिकाकुरुविन्दरसाञ्जनम् ॥ ९५ ॥
कूर्मपृष्ठं च तुल्यानि तेभ्योऽर्धांशं मनःशिला ।
अर्धमानानि मरिचसैन्धवायोरजांसि च* ॥
अथो यथोत्तरं दद्यादयसा च समं विषम् ॥ ९६ ॥

**अथ सर्वनेत्रामयहरा वर्तिः**—आगारधूमसहितैर्बस्तमूत्रेण कल्कितैः ।
भल्लातकाग्निशम्याकविषैर्वा मूत्रपेषितैः ॥
लेपो विचर्चिकादद्रुरसिकाकिटिभापहः ॥ ९७ ॥

**अथ कुष्ठजिल्लेपः**—शम्याकपत्रत्वङ्मूलं विषं तक्रं च तद्गुणम् ।
विषं तुम्बुरुबीजानि वाजिगन्धाम्लवेतसम् ॥ ९८ ॥
हरिद्रावायसीरास्नाहरितालं मनःशिला ।
पटोलनिम्बपत्राणि कणागन्धकसैन्धवम् ॥ ९९ ॥
विषं दारु शिरीषास्थि तक्रं लेपेन कुष्ठजित् ॥ १०० ॥

**अथ कुष्ठहारि तैलम्**—करञ्जकरवीरार्कमालतीरक्तचन्दनैः ।
आस्फोताकुष्ठमञ्जिष्ठासप्तच्छदनिशानतैः ॥ १०१ ॥
सिन्धुवारवचाक्ष्वेलैर्गवां मूत्रे चतुर्गुणे ।
सिद्धं कुष्ठहरं तैलं दुष्टव्रणविशोधनम् ॥ १०२ ॥

**अथ नवनेत्रवर्तिः**—कुष्ठाश्वमारभृङ्गार्कमूलस्नुक्क्षीरसैन्धवैः ।
तैलं सिद्धं विषावापमभ्यङ्गात्कुष्ठजित्परम् ॥ १०३ ॥
भद्रश्रीदारुमरिचद्विहरिद्रात्रिवृद्घनैः ।
गोमूत्रपिष्टैः पलिकैर्विषस्यार्धपलेन च ॥ १०४ ॥
ब्राह्मीरसार्कजक्षीरगोशकृद्रससंयुतम् ।
प्रस्थं सर्षपतैलस्य सिध्ममाशु व्यपोहति ॥ १०५ ॥
ः रसक्रियेयं मधुना पिल्लशुक्रार्मकाचनुत्॥१०६॥

---

* † * पूर्वोक्तपुष्पाचिन्हद्वयस्थानेन किं भविष्यति ?।

---

१ क. °रिभावित°। २ अ. स्तन्ये घृष्टं। ३ ज चशावघ्न द्विनम°। ४ ख. °घ्नर्मपिधम्। ५ ग. °नस्फटि-कनु°। ६ क. °दारा द°। ७ न. °रसिका°। ८ क °निम्बु°। ९ क. °वैजक्षारगो°। १० ग. सिद्धमा°।

**अथ सूर्यप्रभा**—अभीक्ष्णं शीततोयेन सिञ्चेन्नेत्रे विषाञ्जिते।
रक्तचन्दनमञ्जिष्ठातिन्तिणीफलसक्तुकैः।
अयसा लोधकतकनिशाशङ्खकणोषणैः॥ १०७॥
मनःशिलाकरञ्जाक्षबीजोग्राफेनसैन्धवैः।
अजाक्षीरैः समविषैर्वर्तयो विहिता हिताः।
शुक्लार्ममांसपिल्लेषु ग्रन्थिगण्डार्बुदेषु च॥ १०८॥
रसोनकन्दमरिचविषं सर्षपसैन्धवैः।
पिल्लेक्षणहितं कार्यं सुरसारसपेषितैः॥
पूरयेत्सर्पिषा चानु सर्पिरेव च पाययेत्॥ १०९॥
मधूकसारमधुकविषक्षीरजलैर्घृतम्।
पक्कं संतर्पणं श्रेष्ठं नक्तान्ध्ये त्वचिरोत्थिते॥ ११०॥
अञ्जनं नरपित्तेन रोचनं मधुशृङ्गिभिः।
स्वर्जिकाक्षारसिन्धूत्थं शुक्रशुक्लं वरं विषम्॥
कर्णयोः पूरणं तीव्रकर्णशूलनिबर्हणम्॥ १११॥
नस्यं शिरोरुक्शमनं मत्पकपुष्पीसिताविषम्।
अथवा कतयष्ट्यौह्वशर्करा विषसंयुताः॥
शुण्ठी पथ्या विषं पाठा त्रायन्ती पूतिनासजित्॥ ११२॥
प्रपौण्डरीकमञ्जिष्ठाविषतिन्दुसमुद्भवैः।
निहन्ति साधितं तैलं गण्डूषेण मुखामयान्॥ ११३॥
एलाखदिरकङ्कोलजातीकर्पूरचन्दनैः।
बोलाब्दवालैर्द्विगुणविषैः साराम्बुपेषितैः॥ ११४॥
सपूत्रा वटिकाः क्लृप्ता धृता घ्नन्ति मुखामयान्।
कटुतैलविषं नस्यं पलिताकृपिकापहम्॥ ११५॥
स्नुह्यर्कक्षीरभृङ्गाम्बुगोमूत्रहलिनीविषैः।
गुञ्जाविशालामरिचैः कटुतैलं विषाचितम्॥ ११६॥

---

१ म. °पाञ्जिते। २ च. °स्पूतकैः। ३ घ. आजक्षी°। ४ घ. ॰िषम°। ५ग. °क्षणाहि°। ६ च. पायये°। ७ घ. °सार म°। ८ क. °धुक त्रि°। ९ घ. °क्तान्ध्यन्वे चि°। च. °ान्धे त्व°। १० म. रोचना। ११ ज. °न्धूत्थतुक्रशुक्राम्बर। म. °न्धूत्थशुक्रे पित्त व°। १२ क. °त्थं तथा शुक्र°। १३ म. तीव्रं क°। १४ घ. °न पृथक्पु°। १५ च. °वा कृत°। घ. °वा नत°। ज. °वा घृत°। १६ क.ज. °दृधा-म्रा श°। १७ ज. घ. °युता। १८ घ. °रीक म°। १९ घ. °विष नि°। २० घ. शाल: स°। घ. शाट स°। ज. शाटास°। २१ च. °गुण वि°। २२ च. कृता। २३ घ. °तैल वि°।

खलति शमयत्यम्लपिष्टमष्टगुणं विषात् ।
सिन्धूत्थकार्पासफलं पिण्डितं सह सर्पिषा ॥
क्षीरेणाऽऽजेन वा लेपाद्विषैर्दिग्धायुधव्रणुत् ॥ ११७ ॥
विषं रसाञ्जनं भार्ङ्गी वृश्चिकाली महासहा ।
सवेदने सपाके च व्रणे दुष्टे प्रलेपनम् ॥ ११८ ॥
कृतमालार्कपूतीकवत्सकातिविषाविषम् ।
सिद्धं यदिङ्गुदक्वाथैः सर्पिस्तदपचीहरम् ॥ ११९ ॥

अथापचीघ्नं तैलम्—काकादनीमागधिकानलिकातुण्डिकाफलैः ।
जीमूतबीजकर्कोटविशालाकृतवेधनैः ॥ १२० ॥
पाठान्वितैः पलाधांशैर्विषकर्षयुतैः पचेत् ।
प्रस्थं करञ्जतैलस्य निर्गुण्डीस्वरसाढके ॥ १२१ ॥
तज्जयेदपचीं घोरां नावनाभ्यङ्गपानतः ॥१२२॥ इत्यपचीघ्नं तैलम् ।
गुञ्जाटङ्कणशिग्रुमूलरजनीशम्पाकभल्लातका-
स्तुह्यर्काग्निकरञ्जसैन्धववचाकुष्ठाभयालाङ्गलीः ।
वर्षाभूशठघृशिरीषवरणव्योषाश्वमाराविषं
गोमूत्रं शमयेद्विलिप्तमपचीग्रन्थ्यर्बुदश्लीपदान् ॥ १२३ ॥
[ इत्यपचीग्रन्थिश्लीपदनाशनलेपः ।
विषे प्रतिविषं युञ्ज्यान्मन्त्रतन्त्रैरसिद्ध्यति ।
अतीते पञ्चमे वेगे सप्तमस्यानतिक्रमे ॥ १२४ ॥
युञ्ज्यान्मूलविषं सर्पदष्टानां पानलेपयोः ।
चतुर्भिः षड्भिरष्टाभिर्हीनमध्योत्तमा यवैः ॥ १२५ ॥
मात्रां विषस्य मूलस्य प्रयुञ्जीत च सर्वदा ।
दष्टस्य द्वौ यवौ कीटैस्तिलमात्रं तु वृश्चिकैः ॥ १२६ ॥
नैवत्वत्सक्स्थे पाने तु लूतादष्टस्य नेष्यते ।
त्रैश्यया लेपयेद्दंशं तस्य ज्ञात्वा सुनिश्चितम् ॥ १२७ ॥
क्षीरैःक्षीरघृतैर्युक्तं पीतं हन्ति विषं विषम् ।
ससिन्दुवारतगरं मृतसञ्जीवनं विषम् ॥ १२८ ॥

---

१ ग. °द्विपदायायु°। २ घ. °षडुग्धा°। झ. °षदग्धा°। ३ घ. °लिकोतुण्डि°। ४ ज. °तकस्तु°। ५ झ. °भूषठ°। ६ ज. °शठिमू°। ७ ग. °द्विगुस°। ८ घ °त्रिषे यु°। ९ ज. गुञ्जामूलं त्रि°। १० च. सर्पदष्ट्रूना। ११ घ. मताः। १२ घ. मात्रा। १३ च. मेतस्य। ज. मेलस्य। १४ घ. °श्चिके ॥१२६॥ १५ ज. प्रश्रिके। झ. प्रथाया। १६ ज. क्षीरक्षी°। १७ झ. °रक्षौद्रयुक्तं पी°।

शिरीषकुसुमं पत्रं विषमाखुविषापहम् ।
देवदारु नतं मांसी द्राविडी वाकुची विषम् ।
कुष्ठं च पानलेपाभ्यां समस्तविषनाशनम् ॥ १२९ ॥
मनःशिलाञ्जनालैलासिन्दुवारामराह्वयम् ।
सरक्तं कुङ्कुमविषं घ्मातं निःसंज्ञबोधनम् ॥ १३० ॥
दाहे विषोद्भवे लेपः सकुक्षीरघृतैर्युतः ।
अन्येष्वपि च रोगेषु शेषोपायपरिक्षये ॥ १३१ ॥
प्रत्यहं विषकन्दस्य त्रियवं यवमेव वा ।
शुद्धस्य राजिकाहृद्धया वर्षं भुक्त्वा जयेद्गदान् ॥ १३२ ॥
वचागन्धकसिन्धूत्थत्रायमाणाम्लवेतसम् ।
व्योषाग्निवेल्लपाठाम्लकेर्णीकरिकणाविषम् ॥ १३३ ॥
शांर्ङ्गेष्टीनागदमनीवायसीत्रिफलारसैः ।
भावितं मधुसर्पिभ्यां भक्षितं स्याद्रसायनम् ॥ १३४ ॥
विषशुल्बरसव्योषगन्धकानां पलं पलम् ।
पलद्वयं हरीतक्याश्चित्रकस्य पलैत्रयम् ॥ १३५ ॥
कौन्तीमुस्ताचतुर्जातं कर्षांशं च विचूर्णितम् ।
त्रिर्गुणश्च गुडः कार्या वटिका माषसंमिता ॥ १३६ ॥
भक्षयेत्तां जराग्रस्तो महारोगैश्च पीडितः ॥ १३७ ॥
हरिद्रा निम्बपत्राणि पिप्पल्यो मरिचानि च ।
मुस्ताविडङ्गं मूत्रेण पिष्टमाजेन पिण्डितम् ॥ १३८ ॥
नावनाञ्जनपानेषु गोमूत्रास्रग्रसाञ्जनैः ।
जयेत्प्रयुक्तं विषमज्वरान्सघृतसानिलम् ॥ १३९ ॥
सर्वजं समधु व्योषं गवां मूत्रेण सैतकम् ।
चन्दनस्य कषायेण रक्तपित्तं वृषस्य वा ॥ १४० ॥
क्षयं क्षीराश्वगन्धाभ्यां कासश्वासं समाक्षिकम् ।
तक्रेण ग्रहणीरोगं कृच्छ्रं तन्दुलवारिणा ॥ १४१ ॥
प्रमेहं मधुना गुल्मं शूलं च गुडवारिणा ।
पाण्डुशोफे गवां क्षीरेणाम्भसा त्रैफलेन वा ॥ १४२ ॥

१ ग °टाञ्जलालै°। २ ज. °अटालै°। ३ ग. °यारम°। ४ ञ. °महाह्व। ५ ज. सरत्ता°। ६ ज. °त मूत्र°। ७ ञ °च द्वयमे°। ८ ञ. °ठार्द्रकिष्व क°। ९ ग. °वटीव°। ज. °षण्टकारि°। १० ञ. चाङ्गेरी°। ११ ज. °ट्टग°। १२ घ °गुण च गु°। १३ ज. शीतरम्। १४ च. च°।

गवां मूत्रेण कुष्ठानि क्षौद्रेणौदुम्बराह्वयम् ।
तक्रेण युक्तं चाऽऽलेपाद्दद्रुपामाविचर्चिकाः ॥ १४३ ॥
पीतमुष्णाम्भसा वायुं तुलस्याऽऽलेपनाद्गदान् ।
समूत्रं विस्मृतिं नस्येनाञ्जनेन दृगामयान् ॥ १४४ ॥
स्पन्दाधिमन्थौ सस्तन्यमर्मकोपं सशोणितम् ।
सकासमर्दं काचादीन्सभृङ्गोदं निशोन्धताम् ॥ १४५ ॥
रम्भाकन्दाम्भसा पुष्पं पिल्लं ताम्रमधूर्कटम् ।
सैतूलमार्तिं दन्तानां गण्डूषेण विलेपनात् ॥ १४६ ॥
सगोमूत्रं शीरःशूलं सक्षौद्राम्लं क्षतव्रणान् ।
भगन्दरापचीग्रन्थीन्सक्षौद्रं सगुडं व्रणान् ॥ १४७ ॥
नारिकेलाम्भसा लिङ्गविकारान्सेवनात्पुनः ।
प्रदरं भृङ्गसारेण नागपुष्पस्य सर्पिषा ॥ १४८ ॥
रम्भाकन्दाम्बुसर्पिर्भ्यां पीतं लिप्तमहेर्विषम् ।
गोतकनरमूत्राभ्यामथाऽऽखोर्वृश्चिकस्य तु ॥ १४९ ॥
सार्कक्षीरं विलेपेन लूतानां तु जलोदनम् ।
शतपत्ररसाज्याभ्यां विषं सर्वं च सर्वथा ॥ १५० ॥

**अथ जयगुलिका**—भस्मसूतगुडक्षौद्रघृतैः सह निषेविता ।
जरां जयेदतो नाम्ना गुलिकेयं जयोदिता ॥ १५१ ॥
वचाश्वगन्धामरिचोपकुल्यातालीसमुस्तापिचुमन्दपाठाः ।
विषं च तेषां वटिका जयन्त्यः फले प्रयोगे च जयासमानाः ॥ १५२ ॥

## अथ द्वितीयजयवटिका ।

बाँसामृताखदिरनिम्बविडङ्गपथ्याकाथे विषत्रिकटुचित्रकलोहतिक्ताः ।
आवाप्य मापतुलिता वटिका प्रणीता क्षौद्रान्विता क्षपयति क्षपकुष्ठजातम् ॥ १५३ ॥
कान्ताभ्रकशिलाधातुविषसूतकमाक्षिकम् ।
शीलितं मधुसर्पिर्भ्यां व्याधिवार्धकमृत्युजित् ॥ १५४ ॥

---

१ घ. °द्रेणोदु°। २ घ. विस्मृतं । ३ अ. कासादी°। ४ च. °दीन्सुभ्र भृङ्गानिशा°। घ. °दीसभ्र-भृङ्गाग्निशा°। ५ घ. °शान्ध्यता°। ६ घ. °त्कटः । ७ घ. सपूल°। ८ क. °शूले म°। ९ क. °वरा पुनः । १० झ. °ण नग°। ११ क. °भ्राभ्यां विष सर्वं च सर्वथा ॥ १४९ ॥ १२ ज. समेजलम् । झ. जलोदरम् । १३ ज. विषमी सनियच्छति ॥ १५० ॥ १४ ज. °सूत गु°। १५ ज. °विनए । १६ ज. फलप्र°। १७ ज. यत्सामृ°। १८ अ. °रविभानि°। १९ च. °जातान् ॥ १५३ ॥ २० घ. °लायां तु विद सु°। २१ ज. शीनतं । २२ घ. °र्धकमृ°।

मष्टशुक्तः पयोद्राक्षाकपिकच्छूमहाविषम् ।
शीलयेन्मधुसर्पिर्भ्यां सखर्जूरं सयष्टिकम् ॥ १५५ ॥
शस्त्रप्रयुक्ताद्विषतो गराद्वा लूताभुजङ्गाखुविषाज्जरायाः ।
अकालमृत्युग्रहपाप्मनोऽपि विषाशिनो नास्ति भयं नरस्य॥१५६॥३७३६॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये
विषकल्पो नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

## अथ त्रिंशत्तमोऽध्यायः ।

[ अथ रसकल्पः । ]

**अथ मृतसूताध्यायः**—पीतासवोम्लखात्सत्वं कान्ताद्वा तीक्ष्णमेव वा ।
चतुःषष्टितमांशेन ग्रसितं क्षिप्रमल्पशः ॥ १ ॥
तप्तखल्वेऽम्लयोगेन श्लक्ष्णवस्त्रे विमर्दनात् ।
भूर्जे क्षाराम्ललवणस्नुह्यर्कक्षीरलेपिते ॥ २ ॥
बद्धं वस्त्रावृते स्विन्नमम्ले समरसे रसम् ।
धौतमुष्णारनालेन शुष्कमङ्गुलिमर्दितम् ॥ ३ ॥
पचेत्कच्छपयन्त्रस्थमष्टमांशं पदावृतम् ।
स्वप्रमाणं रसं तिष्ठेज्जीर्णे ग्रासे स्वजीर्यति ॥ ४ ॥
पातयेदासवाम्लेन मर्दयेत्स्थापयेच्च तम् ।
जारणे जारणे वृद्धिं ग्रासं च परिवर्धयेत् ॥ ५ ॥
द्विगुणं योजयेदेवं सत्वमभ्रकसंभवम् ।
पूतीलोहं विषं मूत्रं रसकं गन्धकत्रयम् ॥ ६ ॥
न युञ्ज्याज्जारणे सूतैस्तैर्जीर्णैः स्फोटकुष्ठजित् ।
गुञ्जासैन्धवयोश्चूर्णं देवदालीरसद्रवैः ॥ ७ ॥
टङ्कणं किंशुकरसैर्जम्बीराम्लेन चूलिकाम् ।
मूलकक्षारगोमूत्रप्रमर्दन च गन्धकम् ॥ ८ ॥
स्वर्जिकां भृङ्गराजयोर्पाशाग्रमूलरसेन च ।
ईशतशो भावयेत्सर्वं विडोऽयं वडवानलः ॥ ९ ॥

१ ख. °च्छूमहा° । २ क. °वास्थे सा° । ३ क. °द्वा पं मेष° । ४ क. °हिम्या° । ५ क. °स्विच्छयोगेन मस्तवस्त्रं वि° । ६ ज. °न मृत्युमवस्ति° । ज. °न मृत्युभयमस्ति° । ७ ख. °र्दयेत् । ८ ख. मूर्तंश्चा° । ९ ग. वर्णस्नु° । १० ग. °र्मे र° । ११ क. °तप्तस्ना° । १२ ज. °मार्दये° । १३ ज. तम° । १४ ग. °भोर्लीमा° । १५ क. °येन्मेदे° । १६ ख. ताम् । १७ ज. वर्धिया° । १८ ट. °र्वेर्वे° । १९ ख. पूर्ण्डोर्हर्ति° । २० ख. °न्पर्क म° । २१ ज. °कान्त° । २२ ज. तन्मर्मोर्पि: । २३ ख. °टङ्क । २४ क. शुचिवार । २५ ग. °दे नवान्धकः ॥ ८ ॥ २६ ख. °न्धकः ॥ ८ ॥ २७ क. °षाड्भम° । २८ ज. स्था ।

एवमग्निसहो हंससंयुक्तः केवलोऽथ वा ।
नियामकौषधसिताङ्कोलमूलरसादिभिः ॥ १० ॥
वैक्रान्तप्रमुखैर्वाऽपि रसेन्द्रः सहमर्दितः ।
यन्त्रस्थः क्रमवृद्धेन वह्निनोर्ध्वेन पाचितः ॥ ११ ॥
मृतोऽधराग्निना तप्तोऽप्यक्षीणो नोर्ध्वमाश्रयेत् ।
अथापामार्गतैलेन तथा पुष्करतन्दुलैः ॥ १२ ॥
अथवा मलेपूक्षीरभावितः श्वेतहिङ्गुना ।
मर्दितः पुटपाकेन भस्मतां प्रतिपद्यते ॥ १३ ॥
गोमूत्रद्रोणपुष्पाभ्यां पाकाद्वा कान्तभाजने ।
कङ्गुणीकृष्णधत्तूरतैलाभ्यां वा विमर्दितः ॥ १४ ॥
मृणालतन्तुवर्तिस्थः पीतगन्धवतैलयुक् ।
ज्वलितो यामनात्रं वा मृतवैक्रान्तसंयुतः ॥ १५ ॥
वन्ध्यामृताकन्दगतः पचनाद्भूधरेऽथवा ।
चपलोपलनिर्गुण्डीरसाभ्यां रसकेन वा ॥ १६ ॥
वाराहीरसयुक्तेन चक्रमर्दरसेन वा ।
गन्धपाषाणयुक्तेन बद्धं वा वासिसा रसम् ॥ १७ ॥
पचेद्गन्धकतैलेन यावदाखोटबन्धनम् ।
गन्धारमैपिष्टं द्विगुणगन्धं वा कान्तसंपुटे ॥ १८ ॥
गन्धकाद्वा तृतीयांशं कान्तपर्पटमिश्रितम् ।
मूलकान्मर्दितं लोहं पर्पटान्तर्गतं धमेत् ॥ १९ ॥
यद्वा गन्धकपादेन मर्दितं मूलिकारसैः ।
लोहसंपुटमध्यस्थमङ्गारैर्ध्मातमुत्खनेत् ॥ २० ॥
रोगोक्तयोगयुक्तोऽयं तत्तद्रोगहरो भवेत् ।
समुस्तपर्पटक्राथो भस्मसूतो हरेज्ज्वरम् ॥ २१ ॥
दशमूलकषायेण पिप्पल्या च समुस्तजम् ।
माक्षिकाभयया वासापिप्पल्या चास्रपित्तनुत् ॥
कण्टकारीकषायेण पिप्पल्या च स कासजित् ॥ २२ ॥

१ ख. °ही ज्ञात्वा स°। ज °हो रोह स°। झ °हो लोहसं°। २ झ. नियमैर्नोप°। ३ ग. °तो धारा°। ४ घ. °या पौष्क°। ५ ग. °त्यक्षी°। ६ ग. °त्रिते श्वे°। ज. °त्रितैथैत्र हि°। झ. °वितश्चैत्र हि°। ७ ज. °पुष्पीभ्या। ८ च. °जन। ९ झ. मृनालतन्तुवह्निस्थः। १० ग. °तिस्थपी°। ११ घ. पीनग°। १२ ज. °गतप°। १३ झ. बध्वा। १४ झ. °समार°। १५ ज. °स्मारिष्टद्विगुणगन्धकान्तसमार्दितम् ॥१८॥ १६ क. °गुण ग°। १७ झ. वा तामस°। १८ ज. मूलिकामर्द°। १९ घ. लोहपर्पटान्ते गत। झ. लोहप° २० ग. नयेत्। २१ घ °य न तद्रो°। २२ झ. °मुस्ताप°। २३ घ. समस्त°। २४ घ. °काममया। २५ ग. वासाप°। २६ ग. °स्या वास°।

अजायाः क्षीरसिद्धेन कणायुक्तेन सर्पिषा ।
त्रिफलागन्धकव्योषगुडैर्वा क्षपयेत्क्षयम् ॥ २३ ॥
अथ लोहमयीं मूषामायामे द्वादशाङ्गुलाम् ।
मर्दितं हेमवाराहीग्रहकन्यारसे रसम् ॥ २४ ॥
रसोनपिण्डे दधतीं लोहमय्या सुरन्धया ।
निर्गुण्डीपत्रनिर्यासपीतपादासुगन्धया ॥ २५ ॥
गर्भमूषिकया युक्तां सचक्रां सपिधानकाम् ।
लम्बितां जलपात्रस्थखर्परे द्वारि पाचयेत् ॥ २६ ॥
ऊर्ध्वं वनोत्पलैश्चित्रैरङ्गारैः खादिरैरधः ।
एवमष्टगुणे जीर्णे गन्धके क्षयकुष्ठजित् ॥ २७ ॥
हिक्कां निहन्ति रुचकबीजपराम्लमाक्षिकैः ।
छर्दिदाहौ मधुसितालाजामुद्गसिताम्बुभिः ॥ २८ ॥
अर्शांसि तैलसिन्धूत्थपुटपाचितसूरणैः ।
त्वक्पल्लवैः कषायेण शृतेनोदश्विदम्भसा ॥ २९ ॥
क्षीरिण्या वाऽप्यतीसारं विषूचीं कणहिङ्गुना ।
अजीर्णं काञ्जिकैरण्डक्वाथपथ्यावलेहतः ॥ ३० ॥
कषायपल्लवैः पक्वं बालबिल्वं सनागरम् ।
सगुडं सरसं हन्ति विम्बिसीं दारुणामपि ॥ ३१ ॥
बिल्वकर्कटिकागर्भं मसूरक्वथिताम्बु वा ।
कृच्छ्रं मृतरसक्षीरगोक्षुरक्षीरमाक्षिकैः ॥ ३२ ॥
पारदभस्मशिलाजतुकृष्णालोहमलत्रिफलाकुलत्थबीजम् ।
ताप्यनिशारजकोपलकान्तव्योषरजः सगुडश्च कपित्थात् ॥३३॥
सर्वमिदं परिचूर्ण्य समांशं भावितभृङ्गरसं दिवसादौ ।
विंशतिवारमिदं मधुलीढं विंशतिमेहहरं हरिदृष्टम् ॥ ३४ ॥
न्यग्रोधाचसनाद्यैर्वा क्वाथयुक्तो मृतो रसः ।
पथ्याशुनगोमूत्रैः प्लीहगुल्मनिबर्हणः ॥ ३५ ॥
कलायपूपशम्बूकक्षाराभ्यां पक्तिशूलनुत् ।
सक्तुपूपणतिलक्वाथेनामशूलस्य नाशनः ॥ ३६ ॥

---

१ च. दधती । २ घ. लोहमध्या । ३ च. सरन्धजा । ४ ज. पीत पादांग्ग । ५ घ. धान्विता । ६ घ. पेढ्ना । ७ घ. दाहो म । ८ ज. लाजमुद्गसृता । ९ ग. घ. कषायेण । १० घ. शृतेनोद्दिला । ११ घ. कृच्छ्रमृत । १२ ज. हरतो । १३ ज. कुर्या । १४ ज. दिवादौ । १५ ज. पथ्याशुनगोमूत्रैः सद्यो गु ।

नवनीतसुधाक्षारभाविता भयपोदरे ।
रंहितः सहितो यष्टीवारिणा कामलामये ॥ ३७ ॥
फलत्रिकादिक्काथेन पाण्डुशोफे सकामले ।
शोफे सविश्वभूनिम्बकाथगोमूत्रसंयुतः ॥ ३८ ॥
निम्बामलककल्कुष्ठैः प्रशस्तः सामृतारसः ।
रसोनराजिकावह्निनीलियार्कवपल्लवैः ॥ ३९ ॥
तुल्यं भल्लातकं क्षिप्त्वा क्षीरे तैलं विपाचितम् ।
भूशिरीषसुपर्णाक्षोः पञ्चाङ्गमाक्षिकं घृतम् ॥ ४० ॥
रसं च लीढ्वा कुष्ठार्तो लिम्पेत्त्रिकटुना तनुम् ।
रसगन्धकपिष्टया वा कटुतैलाभियुक्तया ॥ ४१ ॥
कर्पूरमूलीसहनिम्बतैलपातालमूलीरसभावितेन ।
रसेन लिह्यात्सकलं हठं वा विचूर्णितं पुष्परसं स कुष्ठी ॥ ४२ ॥
फेनिलफलाहिदर्वीकन्दरसं खादतोऽनुदिनम् ।
फेनिलमूलोद्वर्तनमाचरतोऽपि च कुतः कुष्ठम् ॥ ४३ ॥
चित्रकवानरिवायसितुण्डीवाकुचिका द्विगुणाः परिपीताः ।
मूत्रयुता मृतसूतसमेतास्तत्क्रभुजः शमयन्ति किलासम् ॥ ४४ ॥
हुतगगनमरीची वाकुचीतालपत्र्यौ सलिलरिपुनकुल्यौ कृष्णशुण्ठ्या सभृङ्गम् ।
मरिचमसितसोमश्वित्रकाङ्कोलबीजं वरतिलशशिलेखे त्वक्च शाखोटकस्य ॥४५॥
फलत्रयं च तत्सर्वं मृतसूतसमन्वितम् ।
क्षीरान्नवर्तनो जग्ध्वा श्वित्रमाशु निवर्तयेत् ॥ ४६ ॥
सनिम्बपल्लवक्षौद्रः कृमीन्हन्ति हुतो रसः ।
पीतो लशुनसिद्धेन तैलेनानिलजान्गदान् ॥ ४७ ॥
विश्वैरण्डशृतक्षीरसहितो गृध्रसीं जयेत् ।
गुडाभयागुडूच्यम्बुयुक्तः पवनशोणितम् ॥ ४८ ॥
त्रिकटुत्रिफलावेल्लैः समांशो गुग्गुलुर्जयेत् ।
वातारितैलसंयुक्तः स्थौल्यं भस्मरसान्वितः ॥ ४९ ॥

---

१ ज. सहितः २ ज. क्षीरते°। ३ ग. °वयष्टया । ४ च. °टालिशु°। ५ झ. °रवरोस°। ६ च. °टारि° झ. तैरा पा°। ७ घ. °र्गासहमा°। ८ घ. हटे वा । झ. हत वा । ९ ग. °रमेन कु°। १० घ. °टारिद°। झ. °लाहिदारांक°। ११ ज. हत°। १२ ज. °चीनायमीना°। १३ घ. °लापुराम°। १४ च. पल°। १५ झ. मृतो । १६ घ. °ण्डसूत°। झ. °ण्डशूत°।

मधूदकाभ्यां युक्तो वा कार्श्ये तु शर्करान्वितः ।
हिङ्गुसौवर्चलव्योषमन्त्रसिद्धेन सर्पिषा ॥ ५० ॥
रसो हन्यादपस्मारमुन्मादं च तथाञ्जनात् ।
मधूककुनटीतार्क्ष्यपारापतमलैर्युतः ॥ ५१ ॥
धान्याम्लपिष्टाष्टमपिप्पलीकान्कार्पासबीजाङ्करमर्दनेन ।
आदाय तैलं घृतसूतयुक्तमक्ष्णि प्रयुञ्जीत विशीर्णरोम्णि ॥५२॥
धत्तूरनिम्बकिसलाजपुरीषधूमैः
कांस्येक्षुराश्मवनितास्तनजेन घृष्टम् ।
भल्लातधूपितरसाञ्जनमञ्जयित्वा
साम्यञ्जनैस्तपनमक्ष्णि रुजं निहन्ति ॥ ५३ ॥
महाभेरीमूलं तुरगधृथुकाम्बोधिकुवलं
रसो जम्बीराम्लं जयति तिमिरं काचमपि च ।
उपात्तं जीमूताद्रविजधरपर्णाम्बुमृदिता
द्रसस्तैलं लेपादिह विविधजाड्यं च गुदजान् ॥ ५४ ॥
वटप्ररोहपिण्डीतमूलत्वक्कृष्णसैर्यकैः ।
केतकीस्तनभृङ्गायःशकलीत्रिफलार्जुनैः ॥ ५५ ॥
पृथग्दशपलैः सार्धं चतुर्द्रोणेष्वपां पचेत् ।
अष्टभागावशिष्टेऽस्मिन्भृङ्गस्वरसपेषिते ॥ ५६ ॥
त्रिफलानीलयश्चूर्णैः पृथग्द्विपलिकैर्युतम् ।
तैलाढकं सैमक्षीरं पक्त्वा मृतरसान्वितम् ॥ ५७ ॥
मेंदानीलं समुद्रस्थं मण्डं धान्याम्लमध्यगम् ।
अभ्यङ्गविधियोगेन केशानां रञ्जनं परम् ॥ ५८ ॥
त्रिफलापटोलमूलव्योषगुडूचीविडङ्गबीजानि ।
समगुग्गुलानि मारितरसमिलितानि व्रणघ्नानि ॥ ५९ ॥
ग्रन्थीन्विलेपयेच्चैषां लेपान्मूलरसान्वितम् ।
नारिकेलोदकं तद्वत्पीतं हन्ति मसूरिकाः ॥ ६० ॥

१ च. °र्श्ये भूशर्करासवः ज. °र्श्ये भूशर्करासवः । २ ग. °तपरैर्युं° । ३ च. °घृसपि° । ४ घ. °जान्कुरम° । ५ ज. °दैकेन । ६ च. °रोचिषा ॥ ५२ ॥ ७ क. °धूधैः का° । ज. धूपैः का । ८ च. नस्तप° । ९ घ. °हाभाराम्° । १० ज. °ठ तरगपृ° । ११ घ. पृथका° । १२ घ. °कुचल । १३ झ. रस जम्बीराम्ले ज° । १४ ज. °पर्ण्यम्बु° । १५ घ. °द्रसतैलाले° । ज. °द्रवैस्तै° । १६ च. °रोह पि° । १७ ज. °कृष्टसै° । १८ घ. °नर्निर्यासः श° । १९ ज. °ढवस° । २० घ. सम क्षी° । २१ घ. महानीलसमुद्रस्थ मण्ड धान्यकमध्यगम् । ज. महामूल मुद्रस्थ मण्डल धान्यमध्यगम् । झ. महानीलं समुदरथमण्डधान्यस्य मध्यगम् । २२ झ. °येलेपाद्घ्नन्तिमूल° ।

मञ्जिष्ठा शबरोद्भवं तुवरिका लाक्षा हरिद्राद्वयं
नेपाली हरितालकुङ्कुमगदागोरोचनागैरिकम् ।
पत्रं पाण्डु वटस्य चन्दनयुगं कालेयकं पारदं
पत्तङ्गं कनकत्वचं कमलजं बीजं तथा केसरम् ॥ ६१ ॥
सिक्थं तुत्थं लोहकिट्टं वसाज्यमाजं क्षीरं क्षीरवृक्षाम्बु चाग्नौ ।
सिद्धं सिध्मव्यङ्गनील्यादिनाशे वक्त्रच्छायामैन्दवीमाशु धत्ते ॥ ६२ ॥
कार्पासपल्लवानन्तारसतैलयुतो हितः ।
अस्थिस्रावे मृतरसो विषे स्थावरजङ्गमे ॥ ६३ ॥
तन्दुलीयकमूलेन वीरामूलेन वा युतः ।
तन्दुलोदकसंमिश्रः पाननावनलेपने ॥ ६४ ॥
सुरभिशक्रद्रसभावितकर्पूरसमन्वितो मृतः सूतः ।
स्थावरजङ्गमकृत्रिमविषजिद्गुञ्जामितो दंभा ॥ ६५ ॥
यक्षाक्षफेनिलरसोनकटुत्रपोग्राराजीवराङ्घ्रिवकुलं लकुचाम्बुपिष्टम् ।
छायाविशोषितमिदं नरवारिवृष्टं सर्पापहं सरसमञ्जनतस्त्रिवारान् ॥६६॥
सर्पिषा पञ्चवर्णस्य बीजं मूलं पुनर्नवात् ।
देवदाल्याः फलं मूलं मूलं च विषपर्णतः ॥ ६७ ॥
पेपिष्टं नरमूत्रेण सर्वथा हि विषापहम् ।
कपित्थपञ्चकर्णालीरसं चाखुविषापहम् ॥ ६८ ॥
कांस्ये ताम्बूल्या नागरं पिष्टमद्भिः पत्रं शैरीषं पिप्पली छागदुग्धैः ।
पत्रं कार्पासात्सर्पिषा वा विलेपात्सूतेनोपेतं वृश्चिकानां विषघ्नम् ॥६९॥
भावितश्चणकाम्लेन वस्त्रमम्लेन मर्दयेत् ।
तेन बाकुचिचक्राह्वकार्पासागस्तिपल्लवान् ॥ ७० ॥
एकस्यै कुट्टितस्याम्ले स्वरसेन रसेन यः ।
प्रक्षालितः प्रयात्येव विषैर्दिग्धव्रणः शमम् ॥ ७१ ॥
रसायनोक्तविधिना शुद्धो लब्धबलः पुनः ।
प्रातः प्रातः कणापथ्याविश्वसैन्धवचित्रकम् ॥ ७२ ॥

---

१ घ. °दान्गोरो°। २ घ. कालेयकं । ३ घ. सेव्य । च. °सिक्य । ४ झ. °रसं तै°। ५ भ. °मिथ पा°। ६ क. °पनम् ॥ ६४ ॥ ७ झ. अग्धः। ८ च. °प्रासाजी°। ९ झ. °चाम्र्तपि°। १० फ. °शिष्ट । ११ क. पिशाचा प°। घ. पिशाच प°। १२ झ. °पित्थं पञ्च नीर र°। १३ घ. पिप्पली । १४ ज. वाऽपिले°। झ. वारिले°। १५ ङ. °स्य टङ्कपरया°। १६ ग. कुट्टि°। १७ च. °पलग°।

पीत्वा संरक्षणायाग्रेरीषदुष्णेन वारिणा।
भृङ्गामलकनिर्यासे भावितं व्योमकान्तयोः ॥ ७३ ॥
भस्मायःसंपुटे धान्ये स्थापितं मधुसर्पिषा।
खादेत्रिशि कणापथ्या मासमेकं तथा पुनः ॥ ७४ ॥
पातनाभस्म वा युक्तमथ सूतस्य भस्मना।
जीर्णाम्लहेम्नः षण्मासाच्छतावर्या रसेन च ॥ ७५ ॥
त्रिफलां मधुसर्पिर्भ्यां खादिरासनभाविताम्।
मृतहेमरसोपेतां भक्षयेद्रक्षयेत्तराम् ॥ ७६ ॥
गन्धकेन हतं सूतं कान्तं धात्रीरसेन च।
त्रिफलासहितं खादेज्जीवेदाचन्द्रतारकम् ॥ ७७ ॥
चित्रकं त्रिफला भृङ्गो हरिद्राञ्जनपत्रिका।
रसत्रिमधुरश्चापि जरावैरूप्यनाशनः ॥ ७८ ॥

**अथ वज्रपञ्जररसः**—रसौषधीनां रसभावितानां सितायुतैः क्षीरमधूदकाज्यैः।
जरां रसो हन्ति च कान्तपात्रे क्षीरं शृतं काञ्चनपादपिष्टया ॥ ७९ ॥
क्षेत्रीकरणमित्युक्तं वज्रभस्मसमं रसम्।
हंसपादीरसैर्घृष्टं विपचेत पुटानले ॥ ८० ॥
तुल्यमीश्वरसं तेन पूर्ववन्मर्दितं पचेत्।
यावच्छकयं चतुर्थांशमानेनानेन भस्मना ॥ ८१ ॥
अम्लपिष्टेन सौवर्णं पत्रमालिप्य मोरयेत्।
राजिकार्धार्धमारभ्य यावन्माषं विवर्धितः ॥ ८२ ॥
चित्रकार्द्रकसिन्धूत्थतीक्ष्णासौवर्चलैः सह।
सेवितः पलपर्यन्तं रसोऽयं वज्रपञ्जरः ॥
शरण्यः परिभूतानां व्याधिवार्धकमृत्युभिः ॥ ८३ ॥

**अथ पञ्चामृतः**—हेममाक्षिककान्ताभ्रवज्रभस्म प्रवेशयेत्।
रसे सहेम्नि सप्ताहं मुण्डिकारसमर्दिताम् ॥ ८४ ॥

---

१ ख. °र्धीतैः भा°। अ. °धीभो भा°। २ घ. °स्मना यु°। ३ घ. °र्ज्यदं°। अ. °ज्यभ्रदं°। ४ अ. °हेम प°। ५ घ. त्रिसन्ध्यं। ६ घ. °र्ध्यां खदिरासनाभा°। ७ घ. °त्तिनम्। ८ ख. °देशम्। ९ अ. दितं। १० घ. मृतं। च घृतं। ११ क. त्रिपुटैस्तु°। १२ ख. °मन्यं र°। १३ ख. °मेन रसम°। १४ ख अम्लेरि°। १५ घ. मारये°। १६ क. °धिम् ॥८२॥ १७ घ. °र्चलैः°। १८ घ. ख. °रुः सर्वम्°। १९ ख. °र्धकमृत्युभिः। ८३ ॥ २० ख. °मेन हे°।

तां पिष्टिं यन्त्रयोगेन पचेत्पञ्चामृताह्वयः ।
रसोऽयं मधुसर्पिर्भ्यां युक्तः पूर्वाधिको गुणैः ॥ ८५ ॥ इति पञ्चामृतः ।

घनसारचतुर्जातकङ्कोलं कटुकीफलम् ।
फलं ताम्बूलवल्लीनां रसस्याक्रमणं परम् ॥ ८६ ॥
भुञ्जीत शालिगोधूमयवषष्टिकजाङ्गलम् ।
मुद्गयूषं गवां क्षीरं मस्तु स्नायात्सुखोम्भसा ॥ ८७ ॥
रूपयौवनसंपन्नामनुरूपां प्रियां भजेत् ।
अभ्यङ्गं कटुतैलेन काञ्जितैलं सुरां दधि ॥ ८८ ॥
कालिङ्गकारवेल्लाम्ललशुनासुरिमूलकम् ।
द्विदलं बिल्ववार्ताकं छत्राकं काकमाचिकाम् ॥ ८९ ॥
अङ्गसंमर्दनं रात्रौ जागरं स्वपनं दिवा ।
अत्यम्लतिक्तलवणं स्वादूष्णं शिशिरौषधम् ॥ ९० ॥
शोकवातातपक्रोधचिन्तां च परिवर्जयेत् ।
साहसं रसलोहानां मारकं च विशेषतः ॥ ९१ ॥
सेवया परिहार्याणां रसस्याजरणा भवेत् ।
शूलो नाभितले जाड्यं निद्रालस्यं ज्वरस्तमः ॥ ९२ ॥
अङ्गभङ्गोऽरुचिर्दाहः पिबेत्तत्र दिनत्रयम् ।
सौवर्चलं सगोमूत्रं कर्कोटीमूलवारिणा ॥ ९३ ॥
मातुलुङ्गस्य वाऽम्लेन मणिमन्थं सनागरम् ।
नागवल्लयुतः सूतः प्रमादाद्भक्षितो यदि ॥ ९४ ॥
सैन्धवं कारवेल्लस्य कन्दं मूत्रैः पिबेद्गवाम् ।
कर्कोटीगरुडीपथ्याशरपुङ्खैर्विपाचितैः ॥ ९५ ॥
अष्टभागावशिष्टं वा गोमूत्रं सैन्धवान्वितम् ।
यत्क्षेत्रीकरणं पूर्वं वेधकं च रसं ततः ॥ ९६ ॥
सेवेत तस्य सिद्धिः स्यादन्यथा मरणं ध्रुवम् ।
कान्ताभ्रताप्यसत्त्वानां वज्रहेम्नो रसस्य च ॥ ९७ ॥

---

१ ग. पिष्टित्रययो॰। २ क. उक्तः। घ. मुक्तः। ३ ज. ॰ङ्कोलकटुकं फ॰। झ. ॰ङ्कोलं क॰। ४ घ. फलाः। ज. फल। ५ घ. रसः स्यात्क्रम॰। झ. रसे स्यात्क्रम॰। ६ ज. ॰खाम्बुना ॥८७॥ ७ झ. ॰मुद्गलां प्रि॰। ८ ज. काञ्जिते॰। ९ झ. ॰लाम्रल॰। झ. ॰रामठ॰। १० घ. द्विदल। झ. पयूलपि॰। ११ घ. काचमा॰। १२ ब. ॰चिका ॥८९॥ १३ घ. सद्दमं म॰। झ. सद्दं सम॰। १४ घ. स्वादुष्णं।॰ १५ ज. शोकं वा। १६ ज. ॰त्रोध चि॰। १७ झ. सहसं। १८ क. ॰सस्य ज॰। १९ ज. ॰स्याजार॰। २० ग. शूले। २१ घ. ॰रा चाम्ले॰। २२ झ. मणिमन्थं। २३ ज. ॰चितैः। २४ ग. गोमूत्रः। झ. गोमूत्रैः।

सप्ताहमम्लपिष्टानां गोलके लेपितेऽन्वहम् ।
*गोजिह्वावायसीपथ्यानिर्गुण्डीमधुसैन्धवम् ॥ ९८ ॥
स्विन्ने भूधरयन्त्रस्थे पश्चात्कठिनतां गते ।
यवचिञ्चापलाशोक्षरांजिकापांसतन्दुलैः ॥ ९९ ॥
आवर्तितान्तर्लिप्तायां मूषायां खदिराग्निना ।
टङ्कणं श्वेतकाचं च दत्वा दत्वा विशोषिते ॥ १०० ॥
मूषायां विडयोगेन समांशं हेम जारयेत् ।
संवत्सरं मुखधृता मृतसंजीवनी मता ॥ १०१ ॥
गुटिका च शस्त्रस्तम्भं कुरुते हरते जरामरणम् ॥ १०२ ॥
समचीर्णजीर्णहेममाक्षिकयोगेन मारितो वृष्यः ।
घृतमधुशतावरीरसदुग्धयुतो मदनवर्धनः सूतः ॥ १०३ ॥
लोहितागस्त्यसारेण कृष्णरम्भाफलद्रुतम् ।
रसं च घनसारं च पीत्वा स्त्रीषु वृषायते ॥ १०४ ॥

युगस्वभावाद्यदि चौषधीनां क्रियासु शक्तिः परिकल्प्यतेऽल्पा ।
आयुर्बलादिष्वपि सा तथेति तस्मान्निषेव्यानि रसायनानि ॥ १०५ ॥
नैं चौषधीनामपि सर्वथैव प्रभावहानिः परिकल्पनीया ।
फलं यथारण्यधर्ममधर्मविशेषंच प्रत्यक्षतः कस्य न सिद्धमेतत् ॥ १०६ ॥
देशकालोपहितानि सात्म्यान्यत्युष्णतीक्ष्णानि यथौषधानि ।
नाशं नयन्ते सहसैव देहं सम्यक्प्रवृत्तानि यथैव वृद्धिम् ॥ १०७ ॥
जित्वा तस्मादिन्द्रियादिप्रदुष्टान्कालोपेतः श्रद्दधानो यथावत् ।
आयुःप्रज्ञातेजसां यद्विवृद्ध्यै वीर्योपेतं शीलयेदौषधं तत् ॥ १०८ ॥

गाथानुसारिणी येषां चित्तज्ञाः पार्श्ववर्तिनः ।
वैद्धिरस्खलिताऽर्थेषु परिपूर्णं रसायनम् ॥ १०९ ॥
दानं शीलं दया सत्यं ब्रह्मचर्यं कृतज्ञता ।
रसायनानि मैत्री च पुण्यायुर्वृद्धिकृद्गणः ॥ ११० ॥

---

* इदं श्लोकार्धं हस्तलिखितपुस्तके नास्त्येव ।

---

१ ख. भूमध्यगे। २ ख. °शाको शर्कोरा° ३ घ. शर्कोरा°। ४ ख. °तित्र तु शिता°। ५ घ. °तिरेऽन्त°। ५ घ. °वान्त च। ६ मुखे धृत्वा मृ°। ७ ख. °कल्पते। ८ घ. °दि सर्वे°। ९ ख. °षेर्यं प्रत्यक्षितोऽत्यन्तं°। १० ख. °मैत्री°। ११ ग. °धने प्र°। १२ ग. सिद्धये। १३ ज. अथैव। १४ ज. °योगे°। १५ ग. °तुल्य°। १६ ग. नाप्निविद्वानः। १७ घ. वृद्धि। १८ घ. °कृद्गुणः। ज. °कृद्गणः ॥ ११० ॥

एतदागमसिद्धत्वात्प्रत्यक्षफलदर्शनात्।
मन्त्रवत्संप्रयोक्तव्यं न मीमांस्यं कथंचन ॥ १११ ॥
लोभयन्त्यातुरं मूर्खा विचित्रैः कर्मकौशलैः।
तेभ्यो रक्षेत्सदाऽऽत्मानमात्मा यस्मात्सुदुर्लभः ॥ ११२ ॥
ते घुणाक्षरवत्कंचिदुत्थाप्य नियतायुषम्।
घ्नन्ति वैद्याभिमानेन शतान्यनियतायुषाम् ॥ ११३ ॥
अज्ञातशास्त्रसद्भावाञ्शास्त्रमात्रपरायणान्।
तान्वर्जयेद्भिषक्पाशान्पाशान्वैवस्वतानिव ॥ ११४ ॥
प्रदीपभूतं शास्त्रं हि दर्शितं विपुला मतिः।
ताभ्यां भिषक्सुयुक्ताभ्यां चिकित्सन्नापराध्यति ॥ ११५ ॥
क्वचिदर्थः क्वचिन्मैत्री क्वचिद्धर्मः क्वचिद्यशः।
क्वचिदभ्यासयोगश्च चिकित्सा नास्ति निष्फला ॥ ११६ ॥
ये क्रियां विक्रियां कुर्वन्त्युपेक्षन्ते स्खलन्ति वा।
खादन्ति ते परप्राणान्निजानि सुकृतानि च ॥ ११७ ॥
यावदुच्छ्वसिति प्राणी यावद्भेषजमत्ति च।
तावच्चिकित्सा कर्तव्या दैवस्य कुटिला गतिः ॥ ११८ ॥
अनाथान्रोगिणो वैद्यः पुत्रवत्समुपाचरेत्।
प्राणाचार्यश्च पितृवत्संपूज्यः शक्तिभक्तितः ॥ ११९ ॥
न प्राणिरहितो देशो न च प्राणी निरामयः।
तस्मात्सर्वत्र भिषजां कल्पिता एव वृत्तयः ॥ १२० ॥
यज्ञस्य च शिरश्छिन्नमश्विभ्यां संधितं पुरा।
पातिता दशनाः पूष्णो भगस्य च विलोचने ॥ १२१ ॥
राजयक्ष्मार्दितश्चन्द्रस्ताभ्यामेव चिकित्सितः।
भार्गवश्च्यवनः कामी वृद्धः सन्विकृतिं गतः ॥ १२२ ॥
वीर्यवर्णबलोपेतः कृतस्ताभ्यां पुनर्युवा।
एभिश्चान्यैश्च बहुभिः कर्मभिर्भिषगुत्तमौ ॥ १२३ ॥
बभूवतुर्भृशं पूज्याविन्द्रादीनां महात्मनाम्। २१८३३
सौत्रामण्यां च भगवानश्विभ्यां सह मोदते ॥ १२४ ॥

---

१ घ. क्षोभ॰। २ च. ॰र्तिकचि॰। ३ च. तद्वर्जे॰। ४ च. दर्शन॰। ५ घ. ॰वैन्यपे॰। ६ ज. ॰वद्भेपज्यमस्ति च। घ. ॰मत्ति च॰। ७ क. अन्यथा। ८ क. ॰चार्ये च पितृवत्पूज्यश्च स्वशक्तित। ङ. ॰चार्ये च पितृवत्पूज्य भक्तिशक्तित। ९ ङ. एतैश्चा॰। १० घ. ॰मन्यश्च भ॰। ङ. ॰मन्यश्च भ॰।

अश्विभ्यां सहितः सोमं प्रायः पिबति वासवः ।
अश्विभ्यां कल्पितो भागो यज्ञेषु च महर्षिभिः ॥ १२५ ॥
अश्विनावग्निरिन्द्रश्च वेदेषु सुतरां स्तुताः ।
वैद्यावित्यश्विनौ देवौ पूज्येते विबुधैरपि ॥ १२६ ॥
अजरैरमरैर्नित्यं सुखितैरेवमोदतैः ।
व्याधिमृत्युजराग्रस्तैर्दुःखप्रायैः सुखार्थिभिः ।
किं पुनर्भिषजो मर्त्यैः पूज्याः स्युर्नाऽऽत्मशक्तितः ॥ १२७ ॥
*रसरत्नसमुच्चयो मयेत्थं रचितः
साधु नितान्तमाद्रियन्ताम् ।
सुधियो यदि विद्यतेऽत्र दोषः
क्वचिदर्हन्ति मयाप्यलं विसोढुम् ॥ १२८ ॥ ३८६४ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये रसकल्पो नाम त्रिंशोऽध्यायः ॥ ३० ॥

॥ समाप्तश्चायं ग्रन्थः ॥

---

* श्लोकोऽयं श्रीवो गणपतदिन्पुस्तकयोरेव ।

१ घ. देवेषु । २ घ. °रमृतैर्नि° । ३ घ. °माद्रैः । ४ ग. स्युर्नांऽऽत्म श° । घ. स्युर्नात्मिश° । ज. स्युर्नेत्मि° । झ. स्युर्नाऽऽत्मश° ।

# रसरत्नसमुच्चयस्य शोधनपत्रम् ।

| वर्जनीयम् । | स्वीकरणीयम् । | अ० | श्लो० | पं० |
|---|---|---|---|---|
| वलिना. .... .... .... | प्रकारान्तरेण गन्धकोत्पत्तिः। वलिना .... .... .... | ३ | १७ | १ |
| भन्नो.. .... .... .... | स्विन्नो .... .... .... | ३ | २३ | २ |
| कृति.... .... .... .... | क्रूति... .... .... .... | ३ | २४ | २ |
| सर्वत्र मति .... .... .... | सर्वत्रामति .... .... .... | ३ | २६ | २ |
| छिन्न.... .... .... ... | स्विन्न.. .... ... .... | ३ | ५० | १ |
| शनी.... .... .... .... | शिनी.. .... .... .... | ३ | ६० | २ |
| शनी.... .... .... ... | शिनी.. .... .... .... | ३ | ६३ | २ |
| स्वम्लेन .... .... .... | मल्लेन.. .... .... .... | ३ | ७६ | २ |
| तेलै.... .... .... .... | तैले.... .... .... .... | ३ | ८० | २ |
| ध्रुवम्.. .... .... .... | ध्रुवम्.. .... .... .... | ३ | ८१ | १ |
| कुप्यां.. .... .... .... | कूप्यां. .... .... .... | ३ | ८३ | १ |
| कुपि.... .... .... .... | कूपी... .... .... .... | ३ | ८५ | १ |
| त्रिफले. .... .... .... | त्रिपले. .... .... .... | ३ | ८६ | २ |
| उत्तरोक्तगुणैः.. .... .... | उत्तरोत्तरतः... .... .... | ३ | ९० | २ |
| निरङ्कणा .... .... .... | नीरकणा.. .... .... | ३ | ११४ | २ |
| भावितं .... .... .... | भाविता .... .... .... | ३ | ११५ | १ |
| क्वाथ.... .... .. . .... | क्वाथो... .... .... .... | ३ | ११९ | १ |
| शनी.... .... .... .... | शिनी.. .... .... .... | ३ | १३२ | १ |
| पातयेन्नात्र .... .... .... | जायते नात्र.... .... .... | ३ | १४४ | २ |
| गुरुत्व .... .... .... | गुरुश्च... .... .... .... | ३ | १४९ | २ |
| क्षिर.... .... .... .... | क्षीर.... .... .... .... | ३ | १५४ | २ |
| बन्धस्य कारकाः .... .... | बन्धनकारकाः. .... .... | ४ | १ | १ |
| स्न्रेष्ठ.... .... .... .... | स्प्रेष्ठं... .... .... .... | ४ | १० | २ |
| हूलादि .... .... .... | हूलादि .... .... .... | ४ | १३ | १ |
| विम्वी .... .... .... | विम्व... .... .... .... | ४ | १५ | १ |
| सूक्ष्मं.. .... .... .... | रूक्षं.... .... .... .... | ४ | १८ | १ |
| कन्दरा .... .... .... | कोटरा. .... .... ... | ४ | १८ | १ |
| शुल्व .. .... .... .... | शुभ्र.... .... .... .... | ४ | १८ | २ |
| शुशम्.. .... ... .... | शुभम्.. .... .... .... | ४ | २० | १ |
| पाण्डु कृष्णं च लाघवम् .... | पांडुकृष्णमलाघवम्.... .... | ४ | २१ | १ |
| पीतं श्यामं.... .... .... | पीतश्यामं .... .... .... | ४ | २४ | १ |
| गौरत्रा .... .... .... | प्रासखा .... .... .... | ४ | ३३ | १ |

# रसरत्नसमुच्चयस्य शोधनपत्रम् ।-

| वर्जनीयम् । | स्वीकरणीयम् । | अ० | श्लो० | पं० |
|---|---|---|---|---|
| तैर्मर्द्य वेष्टयेत् | तैः परिवेष्ट्य च | ४ | ३६ | १ |
| रुक्तः | रुक्तं | ४ | ३७ | २ |
| विधिक्रमः | विधिः क्रमात् | ४ | ३७ | २ |
| क्वात्य | क्वाथ | ४ | ३८ | १ |
| स्याले | स्यालैः | ४ | ४१ | १ |
| वर्तते | वर्तयेद् | ४ | ४६ | २ |
| भ्रमच्छुभ्रो | अभ्रशुभ्रो | ४ | ५७ | २ |
| स्थूलं | स्थूल | ४ | ६५ | १ |
| त्यसौ | त्यलम् | ४ | ७१ | २ |
| अशुद्धं न मृतं | अशुद्धममृतं | ५ | ११ | २ |
| समाचरेत् | च मारयेत् | ५ | ११ | २ |
| पिष्टं | पत्रं पिष्टिं वा | ५ | ३५ | २ |
| मिव | मवि | ५ | ७१ | १ |
| पागे | योग | ५ | ७६ | १ |
| भूमिकं | भूमिजं | ५ | ७८ | २ |
| लोहघाते | लोहघाते | ५ | ८१ | २ |
| सुम | सम | ५ | ८२ | १ |
| धा | चा | ५ | ८७ | १ |
| कारतां | व्कारकं | ५ | ९४ | ३ |
| लोहमादौ | शुद्धलोहं | ५ | ९६ | २ |
| संमिश्रं | सांद्रं | ५ | ९९ | १ |
| य | ये | ५ | १०४ | २ |
| तच्च | तच्च | ५ | १०९ | २ |
| द्रवणे स्थितैः | द्रवपेषितैः | ५ | ११९ | १ |
| गन्धं गुडत्रिफलकांभसा | गन्धगुडत्रिफलया सह | ५ | १२२ | १ |
| पुटोश्च | पुटोत्र | ५ | १२२ | २ |
| पुश्री | पुटी | ५ | १२३ | २ |
| त्रि | त्रिः | ५ | १२५ | २ |
| ली | लि | ५ | १२८ | १ |
| गोलकं | गोजले | ५ | १२८ | १ |
| वापेन | तापेन | ५ | १२८ | २ |
| सल्लेतु कृतकञ्जलीम् | सल्वेन कृतकज्जलम् | ५ | १३४ | १ |

# रसरत्नसमुच्चयस्य शोधनपत्रम् ।

| वर्जनीयम् । | स्वीकरणीयम् । | अ० | श्लो० | पं० |
|---|---|---|---|---|
| ता भवेत् .... .... .... | तां व्रजेत् .... .... .... | ५ | १३५ | २ |
| ध्रुवम्.. .... .... .... | मृतम्.. .... .... .... | ५ | १३७ | १ |
| मयानि .... .... .... | मयांश्च .... .... .... | ५ | १४१ | २ |
| शनम्.. .... .... .... | शम्.... .... .... .... | ५ | १४१ | ४ |
| त्तरम्.. .... .... .... | त्तमम्.. .... .... .... | ५ | १४२ | १ |
| जंबू.... .... .... .... | जंबु.... .... .... .... | ५ | १४२ | १ |
| भि .... .... .... .... | त्रिः.... .... .... .... | ५ | १४२ | ३ |
| तत्क्षारं वापेरकान्तं इति .... | तत्क्षारवापात्कान्तइति .... | ५ | १४२ | ३ |
| लोहास्तिष्ठन्ति .... .... | लोहं तिष्ठति .... .... | ५ | १४४ | २ |
| सुतप्तं तु .... ... ... | सुसंतप्तं .... .... .... | ५ | १४७ | १ |
| न्नृणाम् .... .... .... | गुणान् .... .... .... | ५ | १४९ | २ |
| कट्ठलाबु .... .... .... | कटूफलाम्बु .... .... | ५ | १५७ | २ |
| घोषा.. .... .... .... | घोषो .... .... .... | ५ | १५८ | १ |
| कीर्तितम् .... .... .... | शस्यते .... .... .... | ५ | १६० | १ |
| पत्राणि लेपयेत् .... .... | पत्रं प्रलेपयेत् .... .... | ५ | १६२ | १ |
| सिला.. .... .... .... | शिला .... .... .... | ५ | १६६ | १ |
| कृष्ण.. .... .... .... | कृष्णं.. .... .... .... | ५ | १७१ | १ |
| सिन्धुवारजटाकान्ती .... | सिन्दुरवारजटाकोन्ती .... | ५ | १७३ | १ |
| वारे ... .... .... .... | वारं.... .... .... .... | ५ | १७३ | २ |
| विषस्य नि .. .... .... | घर्षयित्वा .... .... .... | ५ | १७७ | १ |
| मर्कक.. .... .... .... | मेकेकं .... .... .... | ५ | १७७ | १ |
| शीतिका .... .... .... | शीतक .... .... .... | ५ | १९० | २ |
| संतप्ता. .... .... .... | संतप्त्वा .... .... .... | ५ | १९२ | १ |
| तप्ता .. .... .... .... | तप्त्वा .... .... .... | ५ | १९७ | १ |
| धौतं भू .... .... .... | धौतभू .... .... .... | ५ | २२० | १ |
| खकांशरेत्.... .... .... | खकाङ्करेत्.... .... .... | ५ | २२२ | ३ |
| संभूत.. .... .... .... | संभूति .... .... .... | ५ | २२५ | २ |
| तमं.... .... .... .... | मिदं .... .... .... | ५ | २३१ | १ |
| पाण... .... .... .... | शाण .... .... .... | ५ | २३१ | २ |
| पेपिकां .... .... .... | पेशिकां .... .... .... | ५ | २३२ | २ |
| वाकुची .... .... .... | वाकुची .... .... .... | ५ | २४१ | १ |
| विशोधयेत्.... .... .... | निरोधयेत् .... .... .... | ५ | २४२ | १ |

# रसरत्नसमुच्चयस्य शोधनपत्रम् ।

| वर्जनीयम् । | स्वीकरणीयम् । | अ० | श्लो० | पं० |
|---|---|---|---|---|
| पश्चादुद्धृतं.... .... .... | पक्षादुद्धृत्य.... .... .... | ५ | २४२ | २ |
| कार्यं.... .... .... | सूत .... .... .... | ६ | ७ | २ |
| चौर्यच्छद्म .... .... | चौर्याच्छद्म .... .... | ६ | ९ | २ |
| यथा.... .... .... | पदा.... .... .... | ६ | ११ | २ |
| सं .... .... .... | सा .... .... .... | ६ | १२ | १ |
| च्छत्र .... .... | छत्र .... .... .... | ६ | १७ | १ |
| गोहत्या अयुतानि च .... | स्त्रीगोहत्यायुतानि च | ६ | २२ | १ |
| लिंगं.... .... .... | लिंगे.... .... .... | ६ | २४ | २ |
| राः .... .... .... | रान्.... .... .... | ६ | २८ | २ |
| स्तु .... .... .... | श्च .... .... .... | ६ | २९ | १ |
| कालिनी शक्तिसंयुक्ता .... | कालिनीशक्तिसंयुक्तं .... | ६ | ३४ | २ |
| यणा .... .... | यणम् .... .... | ६ | ३४ | २ |
| लैश्चे.... .... .... | लेप्ये.... .... .... | ६ | ४८ | ३ |
| रपलाः .... .... | पलाः .... .... | ६ | ५२ | २ |
| का शिला .... .... | काः शिलाः.... .... | ६ | ५३ | १ |
| दिव्यौषधादि .... | दिव्यौषधीनां .... .... | ६ | ५४ | २ |
| लंको लंपट.... .... | लंकालंपट । लंको लंपक .... | ६ | ५९ | १ |
| राजेन्द्रा .... .... | सूतेन्द्रा .... .... | ६ | ६० | १ |
| रोगिणां .... .... | रोगिणा .... .... | ६ | ७१ | २ |
| सर्वौषध .... .... | सर्वौषधि .... .... | ७ | १ | २ |
| ग्व.... .... .... | श्व .... .... .... | ७ | २ | १ |
| यक्षत्र्यक्षा सहस्राक्षा दि .... | यक्षत्र्यक्षसहस्राक्षदि साधीयः यक्षराजसहस्राक्षदि | ७ | २ | १ |
| रकौ.... .... .... | रको.... .... .... | ७ | ६ | १ |
| नालिके पंक .... | नालिके वंश .... | ७ | ७ | १ |
| कृतान्त .... .... | कृतस्त्व .... .... | ७ | ७ | २ |
| कण्डणी .... .... | कण्डनी .... .... | ७ | ८ | २ |
| कुण्डनी .... .... | कुण्डली .... .... | ७ | १० | १ |
| गोर्वरं .... .... | गोवरं .... .... | ७ | १६ | १ |
| शितोपला .... .... | सितोपलाः .... .... | ७ | १६ | १ |
| च्छ .... .... .... | छ .... .... .... | ७ | १८ | १ |
| समाचरेत् .... .... | समर्चयेत् .... .... | ७ | २२ | २ |

# रसरत्नसमुच्चयस्य शोधनपत्रम् ।

| वर्जनीयम् । | स्वीकरणीयम् । | अ० | श्लो० | पं० |
|---|---|---|---|---|
| वार्तिकाः .... .... .... | वार्त्तिकाः .... .... .... | ७ | २३ | २ |
| भाषज्ञाः .... .... .... | भाषाज्ञाः .... .... .... | ७ | २४ | १ |
| अदैष्टिकः .... .... .... | अदेशिकः .... .... .... | ७ | २७ | २ |
| हस्तो विवर्जितः .... .... | हस्तः स उच्यते .... .... | ७ | २८ | १ |
| भाषज्ञा .... .... .... | भाषाज्ञा .... .... .... | ७ | ३२ | २ |
| क्ता .... .... .... .... | क्त्वा .... .... .... | ७ | ३४ | २ |
| विमर्षा .... .... .... | विमर्षात् .... .... .... | ८ | ७ | २ |
| कृष्णीं .... .... .... | कृष्टीं.... .... .... | ८ | ११ | १ |
| संशुद्धि .... .... .... | संसिद्ध .... .... .... | ८ | १८ | २ |
| व्यूहं विशेषतः .... .... | व्यूहमशेषतः .... .... | ८ | १९ | २ |
| मपि.... .... .... .... | मिति.... .... .... | ८ | २२ | २ |
| त्तीं .... .... .... .... | त्ती .... .... .... | ८ | २८ | २ |
| ण्युनमं .... .... .... | ण्युत्तमं ? .... .... | ८ | २८ | २ |
| साधनम् .... .... .... | नाशनम् .... .... .... | ८ | ३१ | २ |
| स्पृष्ट.... .... .... .... | स्रष्ट .... .... .... | ८ | ३१ | २ |
| माप्ये.... .... .... .... | मासे .... .... .... | ८ | ३४ | २ |
| निर्द्रवे वंग .... .... | दुद्रावे वंश .... .... | ८ | ३५ | २ |
| वरं नागं .... .... .... | वरनागं .... .... .... | ८ | ३८ | २ |
| वार्तिके .... .... .... | वार्त्तिके .... .... .... | ८ | ४१ | २ |
| दले .... .... .... .... | द्रवे .... .... .... | ८ | ४६ | १ |
| लोहेतारत्व .... .... | लोहे तारे च .... .... | ८ | ४६ | २ |
| का .... .... .... .... | कः .... .... .... | ८ | ४८ | १ |
| कृतम् .... .... .... | हि यत् .... .... .... | ८ | ५८ | १ |
| निर्वापणं .... .... .... | निर्यातनं .... .... | ८ | ६० | २ |
| मतिः .... .... .... | मितिः .... .... .... | ८ | ६४ | १ |
| गर्भद्रावणं .... .... | गर्भे द्रावणं .... .... | ८ | ६५ | १ |
| वार्तिकेः .... .... .... | वार्त्तिकेः .... .... | ८ | ६५ | २ |
| रुप्या परा .... .... | रुप्याः पराः .... .... | ८ | ६६ | १ |
| संमुखा .... .... .... | समुखा.... .... .... | ८ | ६९ | २ |
| क्षपणं .... .... .... | क्षेपणं.... .... .... | ८ | ७१ | १ |
| यहुवारं हुतिं .... .... | बहिरेवं हुती.... .... | ८ | ७२ | १ |
| रा .... .... .... .... | र .... .... .... | ८ | ७६ | १ |

# रसरत्नसमुच्चयस्य शोधनपत्रम् ।

| वर्जनीयम् । | स्वीकरणीयम् । | अ० | श्लो० | पं० |
|---|---|---|---|---|
| लेपेन.. .... .... .... | लेपनं... .... .... .... | ८ | ८० | २ |
| सदाग्नियुतचूल्यंतं .... .... | मंदाग्नियुतचुल्ह्यंतः... .... | ८ | ८७ | २ |
| यः अध्यायो.... .... .... | ऽयमध्यायो.... .... .... | ८ | ९० | १ |
| ना .... .... .... .... | नाम्.... .... .... .... | ८ | ९० | १ |
| भाण्डे मुखं .... .... | भाण्डमुखं .... .... | ९ | ७ | १ |
| अधो ... .... .... .... | अधो.... .... .... .... | ९ | ९ | १ |
| लिप्तं स्या .... .... .... | लिप्तस्था .... .... .... | ९ | ९ | १ |
| तस्मिन्निपतितसूतः... .... | पस्मिन्निपतति सूतः.. .... | ९ | १० | २ |
| सले क्रि .... .... .... | तलक्रि. .... .... .... | ९ | २० | २ |
| पूर्णतर. .... .... .... | पूर्वोक्त.. .... .... .... | ९ | २३ | २ |
| सोमनाल .... .... .... | सोमानल .... .... .... | ९ | २७ | २ |
| णम्.... .... .... .... | कम्.... .... .... .... | ९ | २८ | १ |
| लोहस्प .... .... .... | लोणस्य .... .... .... | ९ | २९ | २ |
| वालुकासु प्रतिष्ठितम्.. .... | वालुका सुप्रतिष्ठिता.... .... | ९ | ३५ | १ |
| भागस्प .... .... .... | तद्भाण्डम् .... .... .... | ९ | ३५ | २ |
| पूर्ण भा .... .... .... | पूर्णभा .... .... .... | ९ | ३७ | १ |
| लेपात्ताम्र .... .... .... | लेपताम्र .... .... .... | ९ | ३८ | २ |
| क्षालिका .... .... .... | क्षलिका .... .... .... | ९ | ४१ | २ |
| पत्र.... .... .... .... | [ १९ अथ वलभीयंत्रम् ] यत्र | ९ | ४५ | १ |
| परिन्पस्तस्वल्प .... .... | परि न्यस्य स्वल्प.... .... | ९ | ४६ | १ |
| जलहार्य .... .... .... | द्वलभीय .... .... .... | ९ | ४७ | १ |
| रसपा.. .... .... .... | रसे पा. .... .... .... | ९ | ४७ | १ |
| णम्.... .... .... .... | कम्.... .... .... .... | ९ | ४७ | १ |
| [ १९ अथ जलहार्यंत्रम् ] एत | एत .... .... .... .... | ९ | ५० | २ |
| वार्तिके. .... .... .... | वार्त्तिके .... .... .... | ९ | ५३ | १ |
| वर्तुलां गर्ता.... .... .... | वर्त्तुलं गर्त्त.... .... .... | ९ | ५८ | १ |
| कृष्ट .... .... .... .... | कृष्टि... .... .... .... | ९ | ६१ | २ |
| गत्रोच्य .... .... .... | यंत्रोच्च .... .... .... | ९ | ६८ | ३ |
| रंभणार्थ .... .... .... | रंधनार्थे .... .... .... | ९ | ६९ | २ |
| स्थ .... .... .... .... | स्तात्.. .... .... .... | ९ | ७० | २ |
| जलाधारं .... .... .... | गलाधारे .... .... .... | ९ | ७२ | १ |
| पात्राधो .... .... .... | पत्राधो. .... .... .... | ९ | | |

